शिवकुमारस्य शय्योपरि खड्गप्रहारं दत्तवान् । तदा शिवकुमारस्तत्रागत्य यज्ञदत्तं खड्गेन व्यापादितवान् । ततः शिवकुमारेण चौर चौर इति मुखेनोक्त्वा कथितम्—" चौरेणायं यज्ञदत्तो मारित इति " ॥

अथ प्रातर्यदा शिवकुमारो निजगृहे समायातस्तदा तन्मात्रा पृष्टम्—" रे पुत्र ! यज्ञदत्तः क्वास्ति ? कथं स नाऽऽयातः ?" पुत्रेणोक्तम्—" स मम पृष्ठे समायाति " । अथ शिवकुमारो निजमनसि चिन्तयति—" अहो ! कर्मविपाकः कीदृशोऽस्ति ? मातापि स्वार्थवशतो निजपुत्रं मारयितुमिच्छति ।"

अथ यदा रात्रौ स निद्रालुर्जातस्तदा तन्मात्रा तस्य खड्गो निष्कास्य दृष्टः । तं रुधिरलिप्तं दृष्ट्वा तया चिन्तितम् 'नूनमनेन यज्ञदत्तो मारितः, अत एनं मारयामि' इति विचिन्त्य तया तेनैव खड्गेन निजपुत्रो हतः । स वृत्तान्तस्तत्रस्थया शिवकुमारधात्र्या दृष्टः । तदा क्रोधातुरया तया मुशलेन धारिणी हता । धारिण्यापि च सा चपेटया हता । एवं ते चत्वारोऽपि जीवा निर्दयत्वान्महापातकयोगान्मृत्वा दुःखिनः सन्तोऽल्पायुष्का जाताः परस्मिन् भवे । अतो भव्यजीवैर्जीववधो नैव कार्यः ॥ इति गौतमपृच्छायामष्टमः प्रश्नः ॥ (८)

अथ नवमप्रश्नोत्तरमाह—

नवमप्रश्नः—(अथ गौतमस्वामी पृच्छति—"हे कृपानिधे ! हे जनवत्सल ! हे परमकृपालुभगवन् ! स एव जीवः केन कर्मणा दीर्घायुर्भवति ? ९)

उत्तरः—( परमकृपालुर्भगवान् कथयति— )

गाथा—मारेइ जो न जीवे, दयावरो अभयदाणसंतुट्ठो। दीहाऊ सो पुरिसो, गोयम! भणिओ न संदेहो ॥ २५ ॥ (९)

व्याख्याः—यो जीवान्न मारयति, यश्च दयावान् भवति, पुनर्यो अभयदानं[१] दत्वा सन्तुष्टो भवति स जीवो मृत्वा परभवे सम्पूर्णायुर्भवेत्, हे गौतम! तद्विषये त्वं सन्देहं मा कृथाः ॥२५॥ एवंविधः पुरुषो दामनकवद्दीर्घायुर्भवति। तद्यथा—

राजगृहनगरे जितशत्रुनामा राजा राजते। तस्य जयश्रीनाम्नी राज्ञी विद्यते। तत्र मणिकारः श्रेष्ठी, तस्य च सुयशानाम्नी पत्नी। तयोः पुत्रो दामनकाख्योऽभूत्। स यदाष्टवार्षिको जातस्तदा तस्य पितरौ मृतौ। दारिद्र्यभावात्स दामनको नगरमध्ये धनिनां गृहेषु भिक्षावृत्तिं करोति।

अथैकदा द्वौ मुनी सागरपोताख्यवृद्धश्रेष्ठिनो गृहे आहारार्थं प्रविष्टौ, आहारं च गृहीत्वा यदा तौ बहिः समागतौ, तदा ताभ्यां स भिक्षाचरो बालकस्तस्य द्वारि स्थितो दृष्टः। तं दृष्ट्वैकेन मुनिनोक्तं द्वितीयं मुनिं प्रति-"भो मुने! नूनमयं बालोऽस्य गृहस्य स्वामी भविष्यति।"

अथ गवाक्षस्थितेन गृहस्वामिना श्रेष्ठिना [२]तत्सर्वमाकर्णितम्। तेन च स वज्राहत इव संजातः चिन्तितं च तेन "अहो मयानेकैः कष्टैर्मायावीभूयाऽयं विभव उपार्जितोऽस्ति, तस्य विभवस्य चायं रङ्कः स्वामी भविष्यति, गुरुवचनमन्यथा नैव

१ अहीं अभयदान तथा अहिंसानुं सारी रीते वर्णन करवुं.

२ साधुए बहु विचारीने बोलवुं भाषा समिति वगेरे पांच समितिओनुं वर्णन करवुं.

भवेत्, अत एनं शिशुं केनाप्युपायेनाहं मारयामि तदा वरं ।" इति विचार्य स सागरपोतः श्रेष्ठी तं मुग्धं बालकं मोदकादिभिः प्रलोभ्य चाण्डालपाटके पिंगलाख्यचाण्डालस्य गृहे मुक्तवान् । पश्चात्स स्वयमपि तस्य चाण्डालस्य गृहे गतः । तत्र गत्वा तेन तं चाण्डालं प्रत्युक्तम्—"अहं तुभ्यं मुद्रापञ्चकं दास्ये, त्वमेनं शिशुं शीघ्रं हत्वा मां दर्शय ।" इत्युक्त्वा स निजगृहं गतः ।

अथ स मातङ्गस्तं बालकं सुरूपं वीक्ष्य करुणाऽपरोऽभूत् । ततोऽसौ चिन्तयामास 'यदनेन शिशुनापि सागरपोतस्य कोऽपराधः कृतो भविष्यति ? द्रव्यलोभतो मयापीदृक्कर्म नोचितं कर्तुं, अतो मयाऽस्मै बालाय जीवितदानमेव देयम्' इति विचार्य स चाण्डालः कर्त्रिकया तस्य शिशोः कनिष्ठाङ्गुलीं छित्वा तं प्रत्युवाच-"भो बाल ! अथ त्वमितो द्रुतं पलायस्व यदि जीवितं वाञ्छसि, अन्यथा त्वामनया कर्त्रिकयाऽहं व्यापादयिष्यामि ।"

तत् श्रुत्वा वाताहतद्रुम इव कम्पमानाङ्गः स ततः पलाय्य यस्मिन् ग्रामे सागरपोतस्य गोकुलमभूत्तत्र गतः । तत्र नन्दाभिधानेनाऽपुत्रकेन गोकुलस्वामिना स पुत्रतया स्थापितः । अथ स चाण्डालस्तस्य कनिष्ठांगुलीं गृहीत्वा सागरपोतस्य पार्श्वे समागत्य तं तदभिज्ञानं दर्शितवान् । तद् दृष्ट्वा सागरोऽपि स्वमनसि सहर्षो जातः, चिन्तितवांश्च मया मुनेर्वाक्यं विफलीकृतम् । एवं स सागरपोतः सुखेन तिष्ठति ।

अथान्यदा स निजगोकुले गतः । तत्र नन्दगृहे छिन्नाङ्गुलिकं तं दामनकं यौवनस्थं दृष्ट्वा स विषण्णो जातः, नन्दं च पप्रच्छ—"अयं तव पुत्रः कदा जातः ? कुतो वा त्वया समुपलब्धः ? सत्यं ब्रूहि ?" तदा नन्देन कथितम्—"अस्य बाल-

कस्य कनिष्ठांगुली केनचित्कारणेन चाण्डालेन छेदिता, तद्भयात्पलाय्य सोऽत्र मदीये गृहे समागतोऽस्ति, मया च स पुत्रत्वेन रक्षितोऽस्ति"। तत् श्रुत्वा सागरपोतेन विचारितम्–"नूनं मुनेर्वचः सत्यं जातम्"। इति विचार्य चिन्तातुरः श्रेष्ठी स्वपुरं प्रति चलितुं प्रवृत्तः। तदा नन्देन कथितम्–"भो श्रेष्ठिन्नधुनैव भवतामत्रागमनं जातं, ततः शीघ्रं पश्चात्कथं प्रस्थानं क्रियते? किं किंचिद् गृहकार्यं त्वया विस्मृतमस्ति?" तदा श्रेष्ठिनोक्तम्–"ममैकं महद् गृहकार्यं स्मृतिपथमागतं ततोऽहं शीघ्रं गच्छामि"। तदा नन्दो जगाद–"चेद्भवतां किंचिन्महत् शीघ्रं च करणीयं कार्यं भवेत्, तर्हि लेखं लिखित्वा ममास्य पुत्रस्य समर्पय। स शीघ्रमेवेतो गत्वा तं लेखं भवत्पुत्राय तत्र समर्पयिष्यति"। श्रेष्ठिनेऽपि तदुचितं, अतोऽसौ लेखमेकं लिखित्वा दामनकाय ददौ। सोऽपि तं लेखं गृहीत्वा द्रुतं राजगृहनगरसमीपे समागतः।

अथ तस्मिन् लेखे तेन दुष्टेन पापिष्ठेन श्रेष्ठिना स्वपुत्रं प्रतीति लिखितमासीत् यद्–"अस्य लेखस्य समर्पयितारं प्रति त्वया निःशङ्कमनसा विषं देयं, तस्मिन् कार्ये ममाज्ञास्ति"। अथ दामनकस्तं लेखं गृहीत्वा नगरसमीपे समागत्य विश्रामहेतोरुद्यानस्थस्मरदेवकुले स्थितः, मार्गश्रमतश्च तस्य तत्र निद्रा समागता।

इतस्तस्य सागरपोतश्रेष्ठिनो विषाऽभिधाना पुत्री वरार्थिनी स्मरदेवं पूजयितुं तत्र समागता। स्मरदेवं च प्रपूज्य यौवनावस्थाप्रादुर्भावतः सा देवं प्रति वरं ययाचे। इतस्तया तत्र निद्रितदामनकस्य पार्श्वे निजपितृमुद्राङ्कितो लेखो दृष्टः, हस्तलाघवात्तया स गृहीतः। तत्र लिखितं चोदन्तं विज्ञाय तया चिन्तितम्–'अहो मनोज्ञरूपो युवायं वर्तते, ममापि मानसमस्योपर्येव मोदते, अतोऽस्य युनो विषदानतो मारणमयोग्यमेव' इति विचार्य तया कज्जलशलाकया विषशब्दोपरिस्थं

बिन्दुं विलुप्य तस्य स्थाने 'विषा' इत्यकरोत्। पुनस्तं लेखं मुद्रयित्वा दामनकस्य पटाञ्चले सा बबन्ध। ततः स्वयं च निजगृहे समागता।

इतो घटिकानन्तरं दामनकः प्रबुद्धः शीघ्रं नगरमध्ये समागत्य तं लेखं श्रेष्ठिपुत्राय समुद्रदत्ताय दत्तवान्। समुद्रदत्तेन लेखं वाचयित्वा विचारितं "यत्पित्रा लिखितमस्ति अस्मै विषा प्रदीयतां, तस्मिन् विषये कोऽपि सन्देहो न कार्यः, अतो मयाऽपि तदाज्ञानुसारेणैव कर्तव्यम्।" इति विचार्य तेन तयोः शीघ्रमेव विवाहोत्सवो विहितः।

अथ विवाहाद्दिनद्वयानन्तरं सागरपोतकर्णपथे सा वार्ता गोकुलमध्ये एव समागता। तेन सोऽतीव विषण्णः सन् ततो नगरं प्रति प्रस्थितः। मार्गे स मनसि चिन्तयति–'मया यत्किञ्चिद्विधीयते तत्सर्वं [1]विधिस्त्वन्यथा करोति, नूनमयं मद्गृहजामाता जातः, तथाप्यहं पुनरेनं व्यापादयामि' इति चिन्तयन् स दुष्टात्मा पिंगलनाम्नस्तस्य मातङ्गस्य गृहे समागत्य तं प्रत्युवाच–"अरे! चाण्डाल! स त्वया कथं न मारितः? सत्यं वद?" चाण्डालेनोक्तम्–"भो श्रेष्ठिन्! तदा दयापरिणामवशतो मया स न व्यापादितः, अथ पुनस्तं बालं मम दर्शय, यथा तं मारयित्वा तव मनोरथं सफलीकरोमि"।

अथ श्रेष्ठिनोक्तम्–"भो पिंगल! अद्याहं तं दामनकं सन्ध्याकाले मम गोत्रदेव्या आयतने प्रेषयिष्ये, तदा त्वया तत्र स हन्तव्यः"।

अथ सन्ध्यासमये श्रेष्ठी गृहं समागत्य तौ वधूवरकौ प्रतीदमब्रवीत्–"अरे! युवाभ्यामद्यापि किं कुलदेव्याः पूजनं न

१ अहीं कर्म संबंधी वर्णन करवुं.

कृतम्? यत्प्रसादादयं भवतोः संगमो जातोऽस्ति" इत्युक्त्वा पुष्पादिभृतभाजनयुतौ तौ दंपती सन्ध्यासमये पूजार्थं गोत्रदेव्या आयतने स मुमोच।

एवं तौ सन्ध्याकाले पूजार्थं गोत्रदेवीमन्दिरे गच्छन्तौ दृष्ट्वा हट्टस्थितश्रेष्ठिपुत्रः समुद्रदत्त उत्थाय तौ प्रत्युक्तवान्–"अत्र सन्ध्यासमये पूजावसरो नास्ति" इत्युक्त्वा तावेकान्ते तत्र चतुष्पथे संस्थाप्य स्वयं च तत्पुष्पादि गृहीत्वा देवालये प्राविशत्। तदा संकेततस्तत्रागतेन पिंगलचाण्डालेन ज्ञातं यत्स एव पुरुषः समागतः, इति विचार्य तेन स श्रेष्ठिपुत्रः समुद्रदत्तः खड्गेन व्यापादितः, चिन्तितं च–"अद्य मया श्रेष्ठिनो मनोवाञ्छितं कार्यं विहितम्।"

अथ क्रमेण तत्र हाहारवो जातः। सागरपोतो निजपुत्रमरणं विज्ञाय वक्षःस्फोटनेन पुत्रवियोगदुःखितो मृत्युमाप। अथ कुटुम्बिभिर्मिलित्वा स दामनकस्तस्य श्रेष्ठिनो गृहादिसर्वधनस्य प्रभुश्चक्रे। अथ स दामनको यौवनेऽपि धर्मं चकार, परं विषयेषु वाञ्छां न व्यधात्।

एकदा तेन कस्यचित्साधोरग्रे धर्मदेशना[1] श्रुता, देशनाश्रवणानन्तरं दामनकेन पृष्टम्—"हे भगवन्! कृपां विधाय मम पूर्वभवं कथयत।" मुनिनोक्तम्—"भो दामनक! शृणु—

अस्मिन्नेव भरतक्षेत्रे गजपुरनगरे सुनन्दाख्य एकः कुलपुत्रोऽभूत्। तस्य जिनदासाख्य १सुहृद् बभूव। एकदा तावुद्याने गतौ। तत्रस्थं कञ्चनाचार्यं निरीक्ष्य सुनन्दो मित्रसहितस्तदन्तिके समागत्य स्थितः। आचार्येण देशना दत्ता। देश-

१ धर्मना प्रभावनुं वर्णन करवुं.

नामध्ये आचार्येण कथितम्–" यो मनुष्यो मांसं भक्षयति स बहुदुःखभाग्नरकगामी च भवति " इति श्रुत्वा स जातसंवेगो मांसभक्षणस्य शपथं जग्राह, जीवरक्षायां च तत्परोऽभूत् । " तदादितः स कदापि जीवहिंसां नाकरोत् ।

अथ कियत्कालानन्तरं तत्र कल्पान्तकालोपमो दुष्कालः पतितः । सर्वे जनाश्च मांसभक्षणतत्परा जाताः । तदा सुनन्दस्य भार्या तं प्रति कथयति—" हे स्वामिन् ! त्वमपि नद्यास्तीरे याहि, तत्र च नदीमध्ये जालं विस्तार्य मत्स्यान् गृहीत्वानय, येनास्मत्कुटुम्बस्य पोषणं भवेत् " इति तयोक्तोऽसावुवाच—" हे प्रिये ! इदं कार्यं कदाप्यहं न करोमि, अस्मिन् कार्ये महाहिंसा भवति । " तदा भार्ययोक्तम्—" त्वं कैश्चिन्मुण्डकैर्वंचितोऽसि, अतस्त्वं दूरे याहि । " एवं भार्यया बहुशो निर्भ्रंछनात्सुनंदो द्रहे मत्स्यान् निष्कासयितुं गतः । तत्रागाधे जले च जालं चिक्षेप । तत्र जालमध्ये पतितान् मीनान् दुःखाकूलान् वीक्ष्यानुकम्पया स तान् पुनर्जलमध्येऽमुञ्चत् । दिनद्वयावधि तेनैवमेव कृतम् । तृतीयदिनेऽप्येवं करणत एकस्य मीनस्य पक्षिका त्रुटिता । तद् दृष्ट्वा सुनन्दोऽतीव शोकार्तो जातः । स्वगृहे समागत्य च स्वजनान् प्रति जगाद—" अहं कदाचिदपि नरकनिबन्धनरूपां जीवहिंसां न करिष्यामि " एवमुक्त्वा स गृहान्निर्गतः । एवं कियत्कालं यावत्तन्नियमं प्रपाल्य ततो मृत्वाऽयं त्वं दामनको जातः । मत्स्यपक्षत्रोटनकर्मोदयत इह भवे तवैकाङ्गुली त्रुटिता । "

एवं गुरुभ्यो निजपूर्वभवं श्रुत्वा सुनन्दः संवेगतोऽनशनं विधाय समाधिना च स्वायुः प्रपाल्य मृत्वा सुरवरो बभूव । ततश्च्युत्वा मर्त्यभवं प्राप्य जैनीं दीक्षां च प्रपद्य क्रमात्स मोक्षं यास्यति ।

॥ इति जीवदयादानविषये दामनककथा सम्पूर्णा ॥ ( ९ )

अथ दशमैकादशप्रश्नोत्तरमाह–

दशमप्रश्नः—( श्री गौतमस्वामी पृच्छति–"हे कृपासिन्धो ! हे जनवत्सल ! स एव जीवः कथं अभोगी भवति ?" (१०)

उत्तरः—( तदा कृपालुर्भगवान् कथयति–हे गौतम ! )

गाथा—देइ न नियमं सम्मं, दिन्नंपि निवारए दित्तं। एएहिं कम्मेहिं, भोगेहिं विवज्जिओ होइ ॥ २६ ॥

व्याख्याः—यः पुरुष आत्मनो वस्तु कस्मैचिन्न ददाति, पुनः कस्मैचिद्दत्तं वस्तु पश्चाद् गृह्णाति, पुनरन्येभ्यो [1]दानदायकान्निवारयति, ईदृशेन कर्मणा जीवो भोगरहितो भवति, धनसारवत् ।

एकादशप्रश्नः—( श्री गौतमस्वामी पृच्छति–" हे भगवन् ! कृपासागर ! प्रभो ! स एव जीवः कथं भोगी भवति ?" ( ११ )

उत्तरः—( तदा दयालुर्भगवान् कथयति–'हे गौतम ! )

गाथा–सयणासणवत्थं वा, भत्तं पत्तं च पाणयं वावि। हीयेण देइ तुट्ठो, गोयम ! भोगी नरो होइ ॥ २७ ॥

---

१ "विघ्नकरणमन्तरायस्य" इति तत्त्वार्थे (अध्याय ६ सू० २३)" । "जिनपूजादानभोगादिविघ्नहिंसादिप्रवृत्त. इमे अन्तरायकर्माश्रवाः" इति कर्मग्रन्थे ।

व्याख्या:—यः पुरुषः शयनासनवस्त्राणि पट्टिकासंस्तारकपादपुञ्छनकम्बलादीनि पुनर्भक्तं पात्रं पानीयं च साधुभ्यो हृदये हर्षं धृत्वा ददाति, स जीवो हे गौतम! भोगवान् सुखभाग्भवति, धनसारवत् ॥ २७ ॥

अथ धनसारकथामाह—

मथुरायां नगर्यां धनसारनामा श्रेष्ठी वसति । स षट्षष्टिकोटीनामधिपतिः, परं [१]महाकृपणो धर्मे व्ययं न करोति । गृहद्वारि समागतं भिक्षाचरं दृष्ट्वेर्ष्यां करोति, यः कश्चिन्मार्गयति तस्मै एव स कुप्यति, याचकं दृष्ट्वा दूरे भवति, प्राघूर्णकमप्यागतं दृष्ट्वा स्वयं पलायनं करोति । कोऽपि जनः प्रभाते तस्य नामापि न गृह्णाति ।

अथैकदा तस्य वर्धापनिकात्रयमित्थमागतम्—निधानगता द्वात्रिंशतिस्वर्णकोट्योऽङ्गाररूपाः संजाताः, द्वाविंशतिकोटिभृत्प्रवहणं च भग्नं, द्वाविंशतिकोटिभृतानि शकटानि च मार्गे चौरैर्गृहीतानि । एवंविधं वृत्तान्तं श्रुत्वा स धनसारोऽचेतनः शून्यहृदयो जातो भूमौ च पतितः । पश्चाज्जनैः स सचेतनीकृतः, परं शून्यमनाः सन् चतुष्पथे भ्रमति । लोकास्तस्य हास्यं कुर्वन्ति ।

कियद्दिवसानन्तरं स दशलक्षभाटकेन प्रवहणं गृहीत्वा समुद्रमध्ये चलितः । कर्मवशात्प्रवहणं भग्नं, परं तेन पट्टकमेकं लब्धं, तस्य सहायेन स समुद्रं तरित्वा तटे समागतः । अथ तत्रस्थः स एवं चिन्तयति—"मया सुपात्रे दानं न दत्तं, तथाऽन्यपार्श्वान्न दापितं, अत एव मम लक्ष्मीर्गता । लक्ष्म्यास्त्रयो गतयः सन्ति, यथा—दानं भोगो नाश इति, मल्लक्ष्म्या-

१ अहीं कृपणतानुं वर्णन करवुं. मम्मण शेठ तथा श्रेणिकनी दासी कपिलानुं वर्णन करवु.

स्त्वेकैव गतिर्जाता ।

इतस्तत्र वने केवलिनं समवसृतं विज्ञाय स तं वन्दितुं गतः । तं वन्दित्वा श्रेष्ठी केवलिनं गुरुं प्रति पृच्छति–" हे भगवन् ! अहं केन कर्मणैवंविधः कृपणो जातः ? मम लक्ष्मीश्च कथं गता ?" तदा गुरुः कथयति–"भो धनसार ! त्वं शृणु–

धातकीखण्डे भरतक्षेत्रे द्वौ भ्रातरौ महर्द्धिमन्तावास्तां, तयोर्यो वृद्धभ्राता स उदारचित्तो गंभीरः सदा दानमतिश्च बभूव। द्वितीयभ्राता च रौद्ररूपो महाकृपणश्चासीत। अथ वृद्धभ्रात्रा स लघुभ्राता भिन्नः कृतः । दानमाहात्म्यतो वृद्धभ्रातुर्लक्ष्मीर्वर्धते, लघुभ्रातुश्च कृपणस्वभावतो लक्ष्मीस्त्रुटति । तद् दुःखेन दुःखितो लघुभ्राता वृद्धभ्रात्रा सह कलहं करोति । तदा स वृद्धभ्राता वैराग्याद्दीक्षां गृहीत्वा तपसा च कतिचित्कर्मक्षयं विधाय स्वायुःप्रान्ते सौधर्मे सुरोऽभूत् । लघुभ्राताऽप्यज्ञानतपः कृत्वाऽसुरकुमारो जातः । ततश्च्युत्वा स लघुभ्रातृजीवस्त्वं धनसारोऽयं जातः, वृद्धभ्रातुर्जीवश्च देवलोकाच्च्युत्वा तामलिप्त्यां नगर्यां कस्यचिद् व्यवहारिगृहे पुत्रीभूय (पुत्र थइने) पश्चाद्दीक्षां गृहीत्वा कर्मक्षयं च विधायायमहं कैवल्यभूवम्, एवं पूर्वभवस्याहं तव भ्राताऽस्मि । त्वया तदा दानं न दत्तं, अन्तरायकर्म च बद्धं, तदुदयतस्तव धनं गतम् " ।

इति श्रुत्वा धनसारेण गुरोः समीपे इति नियमो गृहीतो 'यदद्यप्रभृत्यहं लाभाच्चतुर्थांशं धर्ममार्गे वितरिष्यामि' । एवं तेन यावज्जीवं नियमो लब्धः । अथ स श्रावकधर्ममङ्गीकृत्य तामलिप्त्यां च समागत्य व्यवसायं करोति । क्रमेण तस्य बह्वी लक्ष्मीर्जाता । अथ स सुपात्रे दानं ददाति, पर्वतिथौ च पोषधव्रतं[1] गृह्णाति ।

१ अहीं पोषधव्रतनुं वर्णन करवु

अथैकदा स पौषधं गृहीत्वा कायोत्सर्गेण कस्मिंश्चिच्छून्यगृहे स्थितः। तत्र केनचिद्व्यन्तरेण सर्परूपं विधाय स दंशितः, परमसौ न [१]क्षुब्धः। ततः संतुष्टेन व्यन्तरेणोक्तम्–"हे श्रेष्ठिन्! त्वं पुनर्मथुरायां याहि। त्वया यद्धनं निधाने स्थापितमस्ति तद्धनं तत्र तथैव विद्यते, अतस्त्वया तन्निष्कासनीयम्"। एवमुक्तः स तत्र गत्वा निजधनं स्वाधीनं चक्रे। क्रमेण च स पुनः षष्टिकोटीनां स्वामी जातः।

अथ स [२]सप्तक्षेत्रेषु धनं व्ययति। तेन तत्र नवीनं जिनमन्दिरं कारापितम्। एवं सोऽस्मिन्नेव भवे पुण्यप्रभावात्सुखी जातः। पश्चात्पुत्रं प्रति गृहभारं दत्वा स्वयं चानशनं विधाय [३]सौधर्मदेवलोकेऽरुणाभविमाने स चतुःपल्योपमायुर्देवो जातः। ततश्च्युत्वा स महाविदेहे मोक्षं प्राप्स्यति।

॥ इति धनसारश्रेष्ठिकथा सम्पूर्णा ॥ (१०–११)

अथ द्वादशमत्रयोदशमप्रश्नोत्तरमाह–

द्वादशमप्रश्नः—(श्री गौतमस्वामी पुनः पृच्छति–"हे [४]वशिनां वरेण्य! हे शरण्य! हे भगवन्! केन कर्मणा स एव जीवः सुभागी (सुखी) भवति?" (१२)

उत्तरः—(श्रीवीरप्रभुराह–हे गौतम!)

१ परीक्षामा पास थया विना कांइ न मले. अहीं वर्तमान समयनी धर्मशिथिलतानुं वर्णन करवु. २ सात क्षेत्रोनुं वर्णन करवुं. ३ अहीं ऊर्ध्वलोकनुं वर्णन करवुं. ४ मुनीनाम्।

गाथाः—गुरुदेवयसाहूणं, विणयपरो संतदंसणीओ य। न भणेइ किंपि कडुयं, सो पुरिसो जायए सुहिओ ॥ २८ ॥

व्याख्याः—यः पुरुषो गुरूणां देवानां साधूनां च विनयं[१] करोति, धर्मनिन्दादि किमपि कटुवचनं न ब्रूते एवंविधः सज्जनानां दर्शनीयः स पुरुष सुखी भवति, सर्वजनवल्लभश्च जायते, राजदेववत् ॥ २८ ॥

त्रयोदशमप्रश्नः—(श्री गौतमस्वामी पृच्छति–"हे कृपासागर! हे दयानिधे! केन कर्मणा स एव जीवः दुर्भागी (दुःखी) भवति ?" १३ )

उत्तरः—( तदा दयालुर्भगवान् कथयति–"हे गौतम! )

गाथाः—अगुणोवि गव्विओवि य, निंदइ घोरे तवस्सिणो कामी। माणी विडंबओ जो, सो जायइ दुही पुरिसो ॥ २९ ॥

व्याख्याः—यः पुमान् निर्गुणी अहंकारी[२] च भवति, पुनर्यो गुणवतां तपस्विनां च [३]निन्दां करोति, पुनर्यः कामी भवति, पुनर्यो जात्यादिमदं करोति, तथाऽन्येषां विडम्बनां च करोति स जीवो मृत्वा दुःखी भवति (भोजदेववत्) ॥२९॥

---

१ नभो भूषा पूषा कमलवनभूषा मधुकरो, वचो भूषा सत्य वरविभवभूषा वितरणम्। सदो भूषा सूक्तिर्निर्मलगुणभूषा सुचरितम्, मनो भूषा मैत्री सकलगुणभूषा सुविनयः ॥१॥ शिखरिणी छन्द॥

२ ज्ञानं पूजां कुलं जातिं बलमृद्धिं तपो वपुः। अष्टावाश्रित्य मानुष्यं स्मरमाहुर्गतस्मयाः ॥१॥ ३ पारकी निन्दा जो करे, कूडा देवे

अत्र राजदेवभोजदेवयोः सम्बन्धमाह—

यथाऽयोध्यायां नगर्यां सोमचन्द्रो राजा राज्यं पालयति । तत्र च देवपालाभिधः श्रेष्ठी वसति । तस्य देवदिन्नानाम्नी भार्या वर्तते । तस्य राजदेवभोजदेवाभिधौ द्वौ पुत्रौ जातौ । तयोर्वृद्धभ्राता राजदेवः सर्वजनानां वल्लभो महासौभाग्यवांश्च बभूव । यदाऽसावष्टवार्षिको जातस्तदा तेन सकला अपि कलाः शिक्षिताः, यौवने च स पित्रा स्वयंवरां कन्यां प्रति परिणायितः । स हट्टे व्यवसायं कुर्वन् बहुतरं लाभमधिगच्छति । राज्ञोऽपि सोऽतीव माननीयोऽभूत् ।

अथ द्वितीयो भोजदेवश्च जन्मत आरभ्य दौर्भाग्यवान् निष्कलश्च जातः । यदा स यौवनवयः प्राप्तस्तदा तस्यार्थे पित्रा बह्व्योऽपि कन्या मार्गिताः. परं कोऽपि तस्मै कन्यां न ददाति । तदा पित्रा कस्मैचित् दरिद्रिणे दिनारपञ्चशतं दत्त्वा तस्य पार्श्वे स्वपुत्रकृते तत्कन्या मार्गिता । परं सा कन्या उवाच—"अहमग्नौ प्रविशामि परमेनं पुरुषं वरं न करिष्यामि, यतोऽसौ कूटव्यवसायान्न किंचिल्लाभमधिगच्छति ॥"

इतः कश्चिद् ज्ञानी गुरुस्तत्र समागतः । पुत्राभ्यां सहितः श्रेष्ठी तं वंदितुं वने गतः । तत्र [१]देशनाश्रवणानन्तरं श्रेष्ठी गुरुं पृच्छति—"हे भगवन् ! ममायमेकः पुत्रः सौभाग्यवान् द्वितीयश्च दौर्भाग्यवान् केन कर्मणा जातः ?"

---

आल । मरम प्रकाशे परतणा, तेथी भलो चंडाल ॥ १ ॥ निन्दा मारी जो करै, मित्र हमारा सोय । बिन साबू बिन पानीये, पाप हमारा धोय ॥२॥ १ धर्मदेशनानां फलनुं वर्णन करवुं.

गुरुः कथयति-“ हे श्रेष्ठिन् ! जीवेन कृतं [१]शुभाशुभं कर्म अभुक्तं न प्रयाति । अस्मिन्नेव नगरेऽस्माद्भवात्तृतीयभवे गुणधरमानधराभिधौ द्वौ वणिक्पुत्रावभूताम् । तयोर्गुणधरो देवगुरुसाधूनां विनये सावधान उपशान्तकोपश्चाभूत् । [२]कदापि स दुर्वचनं न ब्रूते । अथ द्वितीयो मानधरो निर्गुणः सन् तपस्विनां धर्मवतां च निन्दाकारी हास्यकारी च संजातः ।

एकदा वर्षाकाले एकं मासोपवासिनं मुनिं दृष्ट्वा स मानधरस्तस्य निन्दां[३] कृतवान् “ यथायं मायावी मुनिर्लोकान् वञ्चयितुं केवलं यशोऽर्थमेव तपः करोति, नूनमयं पाखण्डी वर्तते ।” तदा तत्साधुसेवाकारक एको देवस्तत्रागत्य तं प्रति कथयति-“भो मानधर ! त्वं साधोर्निन्दां मा कुरु ” । एवं तेन निवारितोऽपि स निजकुचेष्टां न त्यक्तवान् । तदा देवेन चपेटया हतो मृत्वा प्रथमे नरके स नारकी जातः । ततो नरकान्निःसृत्यायं तव भोजदेवाभिधः पुत्रो जातः । एवं साधूनां निन्दाकरणात् स दौर्भाग्यवान् जातोऽस्ति ।”

अथ तौ द्वावप्येवंविधां गुरुवाणीं श्रुत्वा जातिस्मरणं प्राप्तौ । भोजदेवो निजपूर्वभवं दृष्ट्वात्मनो निन्दां कृतवान् । ततस्ते त्रयोऽपि केवलिनः पार्श्वे श्राद्धधर्मं स्वीचक्रुः । कालान्तरे तौ द्वावपि दीक्षां गृहीत्वा मृत्वा च देवलोके गतौ । तृतीयभवे च मोक्षं यास्यतः । यतः-गुण बोले निंदे नहि, ते सोभागी होय । अवगुण बोले परतणा, तें दुर्भागी होय ॥१॥ अतः कारणात्कस्यापि निन्दा न कार्या ॥

॥ इति राजदेवभोजदेवयोः कथा समाप्ता ॥ (१२-१३)

---

१ शुभ अने अशुभ कर्म तथा तेना फलनुं वर्णन करवुं. २ सत्पुत्र तथा मिष्ट वचननुं वर्णन करवुं. ३ मुनिनी निंदानुं विस्तारथी वर्णन करवुं.

अथ चतुर्दशम पञ्चदशम प्रश्नोत्तरमाह—

चतुर्दशमप्रश्नः—(श्रीगौतमस्वामी पृच्छति—"हे दयासिन्धो! हे कृपासागर! हे कृपालो भगवन्! केन कर्मणा स जीवो मेधावी भवति?" १४)

उत्तरः—(भगवान् महावीरप्रभुः कथयति—हे गौतम!)

गाथा—जो पढइ चिंतइ सुणे, अन्नं पाढेइ देइ उवएसं। सुयगुरुभत्तिजुत्तो, मरिउं सो होइ मेहावी ॥ ३० ॥

व्याख्याः—यः [1]शास्त्रं पठति चिन्तयति शृणोति च, तथैव अन्यं पाठयति धर्मोपदेशं च ददाति, पुनः शास्त्रस्य गुरोश्च यो भक्तिकारको भवति, स जीवो मृत्वा मेधावी भवति। यथा मतिसारमन्त्रिपुत्रः सुबुद्धिमान् निजबुद्धया राजलोके वल्लभो जातः।

पञ्चदशमप्रश्नः—(श्री गौतमस्वामी पृच्छति—"हे दयानिधे! हे कृपासिन्धो! भगवन्! केन कारणेन स जीवो दुर्मेधा भवति?" (१५)

उत्तरः—(महावीरप्रभुः कथयति—हे गौतम!)

गाथा—तवनाणगुणसमिद्धी, अवमन्नइ किर न याणइ एसो। स मरिऊण अहन्नो, दुम्मेहो जायइ

१ अभ्यन्तर-तपनु वर्णन करवु.

पुरिसो ॥ ३१ ॥

व्याख्या—यः पुरुषस्तपस्विनं ज्ञानवन्तं च गुणवन्तं चापि दृष्ट्वा तं मत्यवगणयति, यथाऽयं किं जानाति ? एवं यो मुखेन वक्ति स जीवो मृत्वा कुबुद्धिमान् अधन्यो लोके च निन्दनीयो भवति, दुर्बुद्धिवत् ॥ ३१ ॥

अथ तयोः सम्बन्धमाह—

क्षितिप्रतिष्ठिते नगरे चन्द्रयशा [१]राजा राज्यं करोति । तस्य मतिसारनामा मन्त्री वर्तते । तस्य [२]मन्त्रिणो द्वौ पुत्रौ स्तः, एकः सुबुद्धिनामा, द्वितीयश्च दुर्बुद्धिनामा । मतिसारेण मन्त्रिणा तौ द्वावपि कलाचार्यस्य पार्श्वे पाठितौ । प्रथमेकः कलावान् विद्वान् सुबुद्धिश्च जातः । द्वितीयस्तु निष्कलो विद्यारहितो महामूर्खो बभूव । लोकैरपि तन्नाम दुर्बुद्धिरिति विहितम् ।

तत्र नगरे धनाभिधश्चैकः श्रेष्ठी वसति । तस्य चत्वारः पुत्राः सन्ति—एको जावडः, द्वितीयो भावडः, तृतीयो वाहडः, चतुर्थश्च सावडः । एवं ते चत्वारोऽपि परिणायिताः सन्तः सुखेन तिष्ठन्ति ।

अथ कियत्कालानन्तरं स धनश्रेष्ठी रोगग्रस्तो जातः । तदा तेन तान् पुत्रानाकार्य शिक्षा दत्ता, यथा—"भो पुत्रा ! युष्माभिः परस्परं भिन्नत्वं न विधेयम्, (कहा है कि–त्रीने वचने जाये सनेह, त्रीने वचने जाये देह, त्रीने वचने बांधव भडे, एकठा रहे तो गूअड चडे ॥ १ ॥) एकस्थाने एव स्थातव्यं, तथा कदाचिद्भवतां पृथक्त्वं जायते तथापि [३]कलहो न कर्तव्यः । पुत्रैरपि पितुर्वचनं तथेति प्रतिपन्नम् । मया युष्माकं चतुर्णामपि पुत्राणां कृते

१ राजा केवो होवो जोइए तेनुं वर्णन करवुं. २ मन्त्री केवो होवो जोइए तेनु वर्णन करवुं. ३ गृहक्लेशनुं सविस्तर वर्णन करवुं.

चत्वारि निधानानि गृहस्य चतुःकोणकेषु क्षिप्तानि सन्ति, तानि युष्माभिर्गृहीतव्यानि"। इत्युक्त्वा स धनश्रेष्ठी मृतः।

अथ तैश्चतुर्भिर्भ्रातृभिर्मिलित्वा तानि निधानानि निष्कासितानि। तत्र वृद्धभ्रातुः केशनिधानं, द्वितीयस्य मृत्तिकानिधानं, तृतीयस्य कद्दलनिधानं, चतुर्थस्य च स्वर्णरत्ननिधानं निःसृतम्। तदा चतुर्थः पुत्रो निजनिधानं दृष्ट्वाऽतीव हृष्टो बभूव। अन्ये त्रयोऽपि भ्रातरः क्लेशं कर्तुं लग्नाः। [ते परस्परं प्रोचुः-पित्रा वयं वञ्चिताः, वल्लभस्य लघुपुत्राय सारधनं दत्तं, अतो वयं रत्नसुवर्णादिकं धनं विभज्य लामः।] तदा लघुभ्रात्रा प्रोक्तम्-"भो भ्रातरः! पित्रा यद्यद्वस्तु यस्य यस्य दत्तं, तत्तदेव तेन ग्राह्यं, तद्विषये मनस्यन्यथा नैव चिन्तनीयम्।" परं [एवं] ते सर्वे कलहं कुर्वन्तो राज्ञः समीपं समागताः। विज्ञप्तश्च तैं राजा यदस्माकं कलहं त्वं दूरीकुरु! राज्ञा निजमन्त्रिणे तत्कलहदूरीकरणार्थमादिष्टम्। तत् श्रुत्वा मन्त्री किंकर्तव्यमूढः संजातः। तदा तत्रस्थेन सुबुद्धिनाम्ना मन्त्रिपुत्रेण तान् भ्रातॄनेकान्ते समाकार्य कथितम्-"यूयं कलहं मा कुरुत। अतिविज्ञेन युष्मत्पित्रा सर्वेभ्यो युष्मद्भ्यस्तुल्यमेव धनं दत्तमस्ति, यूयं तन्निधानानां परमार्थं न जानीथ। केशभृतनिधानस्वामिनो गोघोटकप्रमुखं धनं दत्तमस्ति। मृत्तिकाभृतनिधानस्वामिनः क्षेत्रंत्राटिकादिरूपं धनं दत्तमस्ति। कद्दलभृतनिधानस्वामिन उद्ग्राहणिकादिगतं धनं दत्तमस्ति। चतुर्थस्य च तत्परिमितमूल्योपेतं स्वर्णरत्नादिरूपं धनं दत्तमस्ति"।

एवं तेन सुबुद्धिना तेषां कलहो दूरीकृतोऽस्ति। तत् श्रुत्वा हृष्टो राजा तस्मै सुबुद्धये निजमन्त्रिपदं ददौ। लोकेऽपि च स प्रसिद्धो जातः।

द्वितीयो मूर्खभ्राता च कुबुद्धिरिति ख्यातो बभूव।

अथान्यदा तस्मिन्नगरे एको ज्ञानी गुरुः परिवारयुतः समागतः । तदा नृपसुबुद्ध्यादयो लोकास्तं वन्दितुं गताः । १देशनाश्रवणानन्तरं सुबुद्धिना पृष्टम्-"हे भगवन्! केन कर्मणाऽयं कुबुद्धिरीदृशो जातः?" तदा गुरुरुवाच-" भो मन्त्रिन्! शृणु—

अस्मिन्नेव नगरे विमलाचलनामानौ द्वौ वणिक्पुत्रावभूताम् । तयोर्विमलेन गुरोः समीपे दीक्षा गृहीता । क्रमेण स द्वादशाङ्गीपाठको जातः । सोऽन्येषां मुनीनां पाठयति । तुष्टेन गुरुणा तस्मै आचार्यपदं दत्तम् । पश्चाद् धर्मोपदेशेन तेन बहवो जनाः प्रतिबोधिताः । स्वायुःक्षयेण च स द्वितीये देवलोके गतः श्रुतभक्तिवशात् । अचलश्च यतीनां ज्ञानवतां च निन्दाकरणात्स्वायुःक्षये मृत्वा द्वितीये नरके गतः । ततश्च्युत्वा विमलस्य जीवस्त्वं सुबुद्धिनामा जातः। द्वितीयोऽचलजीवश्च नरकाच्च्युत्वा निन्दापापयोगादयं दुर्बुद्धिर्जातः । पुनरप्ययं बहु संसारं भ्रमिष्यति । सुबुद्धिरथ दीक्षां गृहीत्वा श्रुतस्य पठनपाठनं च विधाय स्वायुरन्ते पञ्चमे देवलोके देवो भूत्वा क्रमेण मनुजभवं प्राप्य मोक्षं यास्यति ॥

इति सुबुद्धिकुबुद्धिकथा समाप्ता ॥ [१४-१५॥]

(भणे भणावे ज्ञान जे, थाये निर्मल बुद्धि। देव गुरु भक्ति करे, अनुक्रमे पामे सिद्धि ॥)

अथ षोडशसप्तदशमप्रश्नोत्तरमाह—

षोडशप्रश्नः-(श्रीगौतमस्वामी पृच्छति-"हे जनवत्सल! हे करुणासागर! हे कृपालो भगवन्! पुरुषः कथं पण्डितो भवति?" १६)

१ अनित्यादि बार भावनाओ तथा मैत्री आदि चार भावनाओनुं वर्णन करवुं.

उत्तरः—( तदा कृपापरो भगवान् कथयति—हे गौतम ! )

गाथा—जो पुण गुरुजणसेवी, धम्माधम्माइं जाणिउं कुणइ । सुयदेवगुरुभत्तो, मरिउं सो पंडिओ होइ ॥ ३१ ॥

व्याख्याः—यः पुरुषो वृद्धानां सेवां भक्तिं करोति, पुनर्यः पुण्यपापे विज्ञाय पुण्यमेव करोति, पुनर्यः श्रुतस्य गुरोश्च भक्तिं करोति, स जीवो मृत्वा पण्डितो भवति । यथा पूर्वभवे आम्रजीवो देवगुरुभक्त्या कुशलनामा पण्डितोऽभूत् ॥३१॥

सप्तदशमप्रश्नः—(श्री गौतमस्वामी पृच्छति–"हे कृपालो ! हे दयासिन्धो ! हे प्रभो ! केन कर्मणा स जीवो मृत्वा मूको (मूर्खो) भवति ?" १७ )

उत्तरः—(तदा प्रभुर्मधुरया गिरा कथयति—हे गौतम !)

गाथा—मारेह खायेह, किं वा पढिएण किं च धम्मेणं । एयं चिय चिंतंतो मरिउं सो काहलो होइ ॥ ३२ ॥

व्याख्याः—यो जीव एवं वदति–" भो मारयन्तु जीवान्, मांसमदिरादिकं च भक्षीकुर्वन्तु, [१]पठनेन च किं भवति ?

---

१ भणतव्यं तु मरतव्यं न भणतव्यं तु मरतव्यम् । फेर दांत कटाकर किं कर्तव्यम् ॥१॥ किस किस को याद कीजिये, किस किसको रोइये । आराम बडी चीज है, सो मुहे ढकके सोइये ॥ रोटी खइए सक्करसे, और दुनियां ढगिये कक्कडसे । परान्नं दुर्लभं लोके, शरीराणि तु पुनः पुनः ॥"

यथा पूर्वभवे आम्र-
तथैव धर्मेणापि किं भवति ?" इदं वचो जल्पन्, एवं च चिन्तयन् स जीवो मृत्वा मूको मूर्खो भवति । यथा पूर्वभवे आम्र-
सुहृत्कुशलगृहे कर्मकरो जातः ॥ ३३ ॥ तयोः सम्बन्धमाह—

धारावत्यां नगर्यां वैश्रवणनामा धनवान् श्रेष्ठी वसति । तस्य कुशलाख्यः पुत्रो द्वासप्ततिकलायुतो महाविज्ञो बुद्धिनि-
धानः पदानुसारिणीप्रज्ञाविचक्षणोऽस्ति । तस्य गृहे एकः कर्मकरोऽस्ति । स महाकुरूपवान् दुर्भाग्यवान् मुखरोगी चास्ति ।
परं तस्योपरि कुशलस्य महान् स्नेहोऽस्ति । स जिनधर्मं जानाति करोति च ।

अथैकदा स कुशलो वनमध्ये क्रीडां कर्तुं गतः । तत्र तेनैको विद्याधरः पृथिव्या उच्छलन् पुनश्च पतन् दृष्टः । तं
तथाविधं दृष्ट्वा कुशलेन पृष्टम्–"भो उत्तम ! त्वं कथं भूमित उच्छलन् पुनः पतसि ?" विद्याधरेणोक्तम्–"मया ममाकाश-
गामिनी विद्याया एकं पदं विस्मृतमस्ति, तेनाहमुड्डीय पुनः पतामि" । कुशलेनोक्तम्–"मम तस्या विद्यायाः प्रथमं पदं
ब्रूहि ?" तत् श्रुत्वा विद्याधरस्तत्प्रथमं पदं कथितवान् । तदा कुशलेन पदानुसारिण्या लब्ध्या विस्मृतं पदं तस्मै कथितम् ।
तत्क्षणमेव तस्याकाशगामिनी विद्या सम्पूर्णा जाता ।

अथ स विद्याधरो हृष्टः सन् कुशलस्य पितुर्नाम पृष्ट्वा स्वस्थाने गतः । द्वितीयदिने वैश्रमणश्रेष्ठिनो गृहं पृष्ट्वा स
विद्याधरस्तत्र समागतः । तस्मिन्नवसरे स कुशलो देवपूजां करोति । तं दृष्ट्वा तेन विद्याधरेण पृष्टम्–"भो कुशल ! त्वमिदं
किं करोषि !" कुशलेनोक्तम्–"देवपूजामहं करोमि" । विद्याधरेणोक्तम्–"को देवः ?" कुशलो जगाद–"वीतरागो देवः ।"
पुनर्विद्याधरेण पृष्टम्–"को धर्मः ?" कुशलेनोक्तम्–"श्रीवीतरागप्रणीतो धर्मः ।" विद्याधरो जगाद–"को गुरुः ?" तेनो-

क्तम्–"सत्यधर्मवक्ता[१] गुरुः।" एवंविधं सम्यक्त्वं[२] तेन विद्याधरेणाप्यङ्गीकृतम्। ततस्तेन विद्याधरेण वैश्रमणश्रेष्ठिनं प्रत्युक्तम्–"हे श्रेष्ठिन्! एकदा मम पित्रैको नैमित्तिकः पृष्टो 'यन्मम पुत्र्याः को वरो भविष्यति?' तदा तेन नैमित्तिकेनोक्तम्–'यस्तव पुत्रस्याकाशगामिनीविद्याया विस्मृतं पदं कथयिष्यति स तव पुत्र्या भर्ता भविष्यति।' अतः कारणादहमत्रागतोऽस्मि, ततस्त्वं त्वत्पुत्रं मम सार्थे मुञ्च? यथा वैताढ्यपर्वते गत्वा मम भगिनीं सुन्दरीं तेन सार्द्धं विवाह्याहं तं पश्चादत्र समानयामि।"

तद्वचः श्रुत्वा श्रेष्ठिना तत्तथैवाङ्गीकृतम्। ततः स विद्याधरस्तं श्रेष्ठिसुतं सार्थे गृहीत्वा वैताढ्यपर्वते च निजगृहं समागत्य तेन सह निजां भगिनीं परिणाय्य, तं च शाश्वतान् चैत्यान् वन्दापयित्वा तेन सह मण्डपे समागत्य श्रमणमुनिं च वन्दित्वा तत्र स्थितः। तदा कुशलेन मुनये पृष्टम्–"हे भगवन्! मम केन कर्मणा निर्मला पदानुसारिणी लब्धिर्जाता?" तदा मुनिः कथयति—

इतो भवात्तृतीये भवे आम्रनिम्बनामानौ द्वौ कुलपुत्रावभूताम्। तौ परस्परमत्यन्तस्नेहपरौ। तयोर्मध्ये एक आम्रो गुरोः सेवां करोति, पुण्यपापयोर्विचारं पृच्छति। एकदा तस्मै गुरुणा भणितम्–"त्वं पञ्चवर्षोपरि पञ्चमासान् यावद् [३]ज्ञानपञ्चमीतपः कुरु।" अथैवं करणतः पुण्यबन्धनात्त्वं ततो मृत्वा देवोऽभूः। ततश्च च्युत्वा त्वमयं वैश्रमणश्रेष्ठिनो गृहे समुत्पन्नः।

---

१ अहीं देव, गुरु तथा धर्मनुं स्वरूप विस्तारथी समजाववुं. २ अहीं समकितना ६७ बोलनुं वर्णन करवुं.
३ अहीं ज्ञानपंचमी तपनुं स्वरूप समजाववुं.

द्वितीयो निम्बाख्यस्तव सुहृन्नास्तिकत्वेन तथा परनिन्दागुरुनिन्दाधर्मनिन्दाकरणाच्च नरके गत्वा, ततश्च च्युत्वा युष्मद्गृहे कर्मकरो जातः। पूर्वकृतदुःकर्मानुसारेण स मूको दौर्भाग्यवान् कुरूपश्च जातः। यथा तस्य नामाभूत्तथैव तस्य परिणामोऽप्यभूत्। एवं हे कुशल! ज्ञानपञ्चमीतपःकरणात्तथा गुरुभक्तिकरणाच्च तव पदानुसारिणी लब्धिरभूत्।"

इत्थं गुरुमुखात् श्रुत्वा कुशलस्य जातिस्मरणज्ञानं समुत्पन्नम्। ततस्तेन २देशविरतिरूपो धर्मोऽङ्गीकृतः। ततोऽसौ सकलत्रो निजगृहे समागतः। विद्याधरोऽपि वैताढये गतः।

अथात्र कुशलः सुन्दर्या सह सुखं भुञ्जानस्तिष्ठति। क्रमेण तस्य द्वौ पुत्रौ जातौ। तयोर्वृद्धपुत्रस्य गृहभारं दत्वा कुशलः पित्रा सह दीक्षां लात्वा शुद्धं चरित्रं च प्रपाल्य मोक्षे गतः। निम्बस्य जीवस्तु भवे भ्रान्त्वा नरके गतः। उक्तं च–" जो नाणपञ्चमीतवं, उत्तमजीवा कुणंति भावजुआ। उवभुंजिय मणुयसुहं, पावंति य केवलं नाणं ॥१॥"

॥ इत्याम्रनिम्बकथा समाप्ता ॥ १६–१७ ॥

अथ अष्टादशमैकोनविंशतितमप्रश्नोत्तरमाह—

प्रश्नः—( श्रीगौतमस्वामी जानन्नपि भव्यजनहितार्थं पृच्छति–" हे कृपासिन्धो, हे दयानिधे! स एव जीवः कथं धीरो भवति?" १८ )

उत्तरः—( तदा श्रीवीरप्रभुः कथयति–हे गौतम! )

गाथा—सव्वेसिं जीवाणं, तासं न करेइ नो करावेइ। परपीडवज्जणाओ गोयम! धीरो भवे य

पुरिसो ॥ ३४ ॥

व्याख्या:—यो जीवः सर्वेषां जीवानां त्रासं भयं नो ददाति, अन्यस्मात् त्रासं च नो कारापयति, तथा यः१ परपीडां वर्जयति, (जनसेवापरोपकारश्च क्रियते) एवंविधः पुरुषो हे गौतम! धीरो भवति, यथा सिंहाख्यः पुरुषो धीरः साहसिकश्च संजातः ॥ ३४ ॥

प्रश्नः— (श्रीगौतमस्वामी पृच्छति-" हे भगवन्! हे करुणानिधे! हे २वशिनां वरेण्य! केन कर्मणा स जीवः भीरुर्भवति ?" (१९)

उत्तरः—(तदा दयालुर्भगवान् उवाच-हे गौतम!)

गाथा—कुक्कुरतित्तरलावे, सूयरहिरणे य विविहजीवे य । निच्चं विग्घो धारेइ, सो सव्वकालं हवइ भीरू ॥३५॥'

व्याख्या:—यः पुरुषः कुक्कुरतित्तरलावान् पुनः शूकरमृगादिविविधजीवान् नित्यं पञ्जरे क्षिप्त्वा रक्षति सर्वजीवानां चोद्वेगं जनयति स पुरुषो मृत्वा सर्वकालं यावद् भीरुर्भवति, अभयसिंह-लघुभ्रातृ-धनसिंहवत् ॥३५॥

---

१ द्विराज हुएसे हुआ फल क्या, यदि ज्ञानके दीप जलाये नही। धिक् क्षत्रिय गेहमें जन्मो लियो, यदि जगके त्रास नसाये नही। सब व्यर्थ वैश्य के गेह भये, यदि विश्वमें वैभव छाये नही। धिक्कार हे मानव जन्म लिये, यदि मानव काममें आए नहीं ॥१॥

२ जितेन्द्रियमुनीनां श्रेष्ठ ॥

अथ तयोः कथामाह—

पृथ्वीतिलकपुरे पृथ्वीराजाभिधो राजा राज्यं करोति । तत्र धर्मसिंहनामैकः क्षत्रियो वसति । स जिनधर्मे रक्तोऽस्ति । तस्याभयसिंहधनसिंहाख्यौ द्वौ पुत्रावभूताम् । तयोर्मध्ये वृद्धोऽभयसिंहो व्याघ्रसिंहसर्पादिभ्योऽपि भयं न प्राप्नोति, चेदाकाशाद्वज्रं पतेत्तथापि स आतङ्कं नो लभते । अन्यो धनसिंहाख्यो लघुभ्राता च रज्जुमपि दृष्ट्वा तं सर्पं मनुते । एवं स मनस्यतीव भयभीतो वर्तते ।

एकदा नगरसमीपे सिंहमागतं श्रुत्वा कोऽपि जनस्तन्मार्गे न याति, तदा प्रधानपुरुषैः राज्ञे निवेदितम्–" भो महाराज ! नगरसमीपे एकः सिंहः समागत्य स्थितोऽस्ति " । तदा राज्ञा सभामध्ये बीटकं करे गृहीत्वोर्ध्वीकृतं, कथितं च– " यः कोऽपि सिंहं विदारयति तस्याहमिदं बीटकं यच्छामि " । राज्ञेत्युक्ते कोऽपि तद्बीटकं न गृह्णाति । तदाऽभयसिंहेन तद् गृहीतं, कथितं च–" अहमेकाक्येव सिंहं विदारयिष्यामि लोकानां च सुखं करिष्यामि " इत्युक्त्वाऽभयसिंहो वने गत्वा बाणेन च सिंहं विदारितवान् । एवं तं सिंहं मृतं ज्ञात्वा स पश्चाद्वलित्वा राज्ञोऽग्रे गत्वा प्रणामं कृत्वा स्थितः । राजाऽपि तुष्टः सन् तं वस्त्रालङ्कारादि दत्त्वा राजमान्यं विहितवान् ।

अथैकदा कश्चिदेकः सामन्तो राज्ञ आज्ञां न मन्यते, मार्गे च लोकानामुपरि धाटीं पातयति, ग्रामांश्च लुण्टति । तं वृत्तान्तं ज्ञात्वा राज्ञाऽभयसिंहस्य तज्जयाय बीटकं दत्तं, कथितं च–"भो अभयसिंह ! त्वं तत्र गत्वा तं दुष्टं च बध्वास्माकं पार्श्वे समानय ! " परं सामन्तेन तद्वचो न स्वीकृतम् । दूतेन पश्चादागत्याऽभयसिंहायोक्तं यत्स सामन्तो राज्ञ आज्ञां नाङ्गी-

करोति, कथयति चाहं युद्धं करिष्यामीति ।

तत् श्रुत्वाऽभयसिंहो रात्रावेकाक्येव प्रच्छन्नरीत्या दुर्गमुल्लङ्घ्य सामन्तस्य गृहे प्रविष्टः । तत्र तं सुप्तं सामन्तमुत्थाप्य तेन सह च युद्धं कृत्वा तं बद्धवान्। ततोऽनन्तरं तस्य सामन्तस्य भार्ययाऽभयसिंहपार्श्वाद्भर्तृरूपां भिक्षां मार्गयित्वा नत्वा च स मुक्तबन्धनः कारितः। तदा सोऽप्यभयसिंहस्य सेवको जातः।

अथ तस्यामेव रात्रावभयसिंहस्य कटके सर्वेऽपि जनाश्चिन्तातुरा जाताः यदद्यास्माकं स्वामी क्व गतः ? कटकमध्येऽपि स क्वापि न दृश्यते। एवं सर्वे सुभटा मिलित्वा यदा चिन्तातुरा जातास्तदैकेन जनेन तत्र समागत्योक्तम्–"यद् भो सुभटा अस्मत्स्वामिनाऽभयसिंहेन कथितमस्ति यदहं सामन्तस्य गृहे तं जित्वा स्थितोऽस्मि, अतो यूयं सर्वेऽप्यत्रागच्छत।" तां वार्तां श्रुत्वा सर्वेऽपि सानन्दाश्चर्यं प्राप्ताः सन्तस्तत्र गताः। सामन्तेन ते सर्वेऽपि भोजनं कारिताः सन्मानिताश्च।

ततोऽसावभयसिंहस्तं स्वसार्थे गृहीत्वा राज्ञोऽग्रे च गत्वा कथयामास–"भो महाराज ! सामन्तोऽयमद्यप्रभृति भवत्सेवको जातोऽस्ति, अहं च तं सार्थे लात्वाऽत्रागतोऽस्मि"। तदा राजा हर्षवशादभयसिंहस्यैकं देशं दत्वा [1]सामन्तं च तस्य देशे मुक्तवान्।

अथैकदा श्रुतसागराख्यश्चतुर्ज्ञानी मुनिः समागतः। तदा सपरिवारो राजा तं वन्दितुं गतः। धर्मसिंहोऽपि मुनिवन्दनार्थं तत्र समायातः। देशनानन्तरं धर्मसिंहेन गुरवे पृष्टम्–"हे भगवन् ! मम वृद्धपुत्रो महासाहसिकः पराक्रमी चास्ति,

१ अहीं आर्य संस्कृतिनी उदारतानुं वर्णन करवुं.

लघुपुत्रस्तु भयातुरोऽस्ति, अत आभ्यां पूर्वभवे किं कर्मोपार्जितं तत्कृपां विधाय यूयं कथयत।" तदा गुरुरवदत्–

अस्मिन्नेव नगरे इमौ पूर्वभवे पूरणधरणनामानौ द्वावाभीरकावभूताम्। तयोः पूरणेन दया पालिता जीवानां च रक्षा कृता। धरणेन च तित्तरादयस्त्रासोत्पादनपूर्वकं पञ्जरे क्षिप्ताः। पुनस्तेन मृगादयो बन्धनपूर्वकं मारिताः। अतो दयापालनतस्तवायं पुत्रः पूरणजीवोऽभयसिंहो महापराक्रमी निर्भयः शूरश्च जातः। धरणजीवश्च जीवानां त्रासोत्पादनाद्यं तव पुत्रो भयभीतो धनसिंहो जातः।

तत् श्रुत्वा धर्मसिंहोऽभयसिंहो धनसिंहश्च ते त्रयोऽपि श्राद्धधर्मं गृहीत्वा स्वायुःक्षये स्वर्गं गताः।

इत्यभयसिंहधनसिंहयोः कथा ॥ (१८-१९)

अथ विंशतितमप्रश्नोत्तरमाह—

प्रश्नः—( श्रीगौतमस्वामी पृच्छति–" हे कृपावतार! हे ज्ञानकलानिधान! हे भगवन्! केन कर्मणा विद्या निष्फला भवति ?" (२०)

उत्तरः—( तदा भगवान् महावीरप्रभुः कथयति–हे गौतमः )

गाथा—विज्जां विन्नाणं वा, मिच्छाविणएण गिण्हिउं जो उ। अवमन्नइ आयरियं, सा विज्जा निप्फला तस्स ॥ ३६ ॥

व्याख्याः—यः पुरुषो विद्यां विज्ञानं वा कपटयुक्तविनयेन गुरोः पार्श्वाद् गृहीत्वा गुरुमवमन्यते पश्चाद् गुरुं प्रति नो

मन्यते तस्य विद्या च कला च निष्फलैव भवति, यथा त्रिदण्डिकस्य कला निष्फला जाता ॥३६॥

तस्य सम्बन्धमाह—

राजपुरे नगरे एको विद्यावान् नापितो वसति। विद्यावलेन च स नापित आकाशे क्षुरमादीनि शस्त्राणि धारयति। ततो लोकमध्ये सोऽतीव प्रसिद्धो जातः। तस्मिन्नेव नगरे एकस्त्रिदण्डिको ब्राह्मणोऽस्य नापितस्य विद्यां ग्रहीतुं तस्य भक्तिं करोति। एकदा तेन तस्य विद्यार्पणार्थं प्रार्थना कृता। तदा सन्तुष्टेन तेन तस्मै [1]विधिपूर्वकं सा विद्या दत्ता। तेनापि च सा साधिता। तद्विद्याबलेन च स आकाशे निजत्रिदण्डिकां स्थापयति। लोका अपि सर्वे तस्य तत्कौतुकं पश्यन्ति, प्रशंसां च कुर्वन्ति यथाऽयं महाविद्यावान् वर्तत इति।

अन्यदा लोकैस्तस्मै पृष्टम्—"भो त्रिदण्डिक! त्वया कस्य गुरोः पार्श्वादियं विद्या शिक्षिता?" तेनोक्तम्—"मयेयं विद्या हिमवन्तवासिनो विद्याधरस्य पार्श्वाच्छिक्षिता, अतो मम विद्यागुरुर्विद्याधरोऽस्ति इत्युक्त्वा तेन तस्य नापितस्य नाम न गृहीतं लज्जावशात्। तत्क्षणमेव गुर्वपलपनात्तस्य त्रिदण्ड आकाशादधः पतितः। तद्दृष्ट्वा लोकैर्हास्यं विहितं, कथितं चायं गुरुलोपी, एवं तस्यावहीलना महती जाता। विद्यापि तस्य निष्फला भूता। यतो गुरुलोपी महापापीति वचनात् गुरोरपलापकर्तुरागामिनि भवेऽपि विद्या निष्फला भवति, विज्ञानं च नागच्छति। अत एव गुरोर्विनयो भव्य-प्रकारेण कार्यः।

॥ इति त्रिदण्डिनो विंशतितमा कथा समाप्ता ॥ (२०)

---

[1] विनयथी विद्या आवे छे.

अथैकविंशतितमप्रश्नोत्तरमाह—

प्रश्नः—(श्रीगौतमस्वामी पृच्छति—"हे दयालो! हे जनवत्सल! हे भगवन्! कथं विद्या सफला भवति?" २१)

उत्तरः—(तदा कृपालुर्भगवान् वक्ति—हे गौतम!)

गाथा—बहु मन्नइ आयरियं, विणयसमग्गो गुणेहिं संजुत्तो। इह जा गहिया विज्जा, सा सफला होइ लोगंमि ॥३७॥

व्याख्या—यः पुमान् गुरुं बहु मन्यते, पुनर्विनयवान् भवति, गुणैश्च संयुक्तो भवति, तद् गृहीता विद्या लोके सफला भवति, यथा श्रेणिकेन विनयेन गृहीताऽऽकर्षिणी विद्या सफला जाता ॥३७॥

श्रेणिकवृत्तान्तो यथा—

राजगृहनगरे श्रेणिको राजा राज्यं करोति। तस्य पट्टराज्ञी चेल्लणानाम्नी वर्तते। पुनस्तस्यैकोऽभयकुमारनामा मन्त्री विद्यते। अथैकदा चेल्लणाया गर्भप्रभावादीदृशो मनसि दोहद उत्पन्नो यथा वनसहिते एकस्तम्भे धवलगृहेऽहं वसामीति तस्य दोहदस्याऽपूर्णीभावात् सा क्रमेणातीव दुर्बला बभूव।

एकदा राज्ञा सा पृष्टा—"त्वं कथं दुर्बला जाता?" तदा तया स्वकीयः सकलोऽपि दोहदवृत्तान्तः कथितः, पश्चाद्राज्ञा स वृत्तान्तोऽभयकुमाराय निवेदयित्वोक्तम्—"त्वमस्या दोहदं केनाप्युपायेन बुद्ध्या पूरय।" तदाऽभयकुमारेणाराधितो देवः

प्रकटीभूयोपवनोपेतमेकस्तम्भान्वितं धवलगृहं कृतवान् । तस्योपवने सर्वर्तुसंभवानि सकलानि फलानि सर्वदैव लभ्यन्ते ।

अथ तस्मिन्नवसरे तत्र नगरे एकश्चाण्डालो वसति । तस्य भार्याया अकाले आम्रफलभक्षणदोहदः समुत्पन्नो गर्भप्रभावात् । तदा तेन चाण्डालेन स्वकीयाकर्षिणीविद्याबलेन तस्य देवनिर्मितस्योपवनस्य मध्यादाम्रवृक्षशाखायां नामयित्वा तत आम्रफलं च गृहीत्वा निजभार्याया दोहदः पूरितः । चाण्डालस्पर्शस्य छोतिकरणात् स आम्रवृक्षः शुष्कीभूतः । प्रभातसमये राज्ञा स वृत्तान्तो ज्ञातः । अभयकुमारमाहूय प्रोक्तम्—" त्वमस्याम्रफलस्य चौरं शोधय ?" ततोऽभयकुमारः सर्वान्नगरजनानाहूय एकायाः कन्यकायाः कथामित्थं कथयितुं लग्नः—

एकस्मिन् ग्रामे काचिदेका वणिक्कन्यका द्वादशवार्षिका कुमारिका एकस्मादारामात्फलपुष्पाणि चोरयित्वा प्रत्यहं कामदेवस्य पूजनं करोति । अथैकदा आरामिकेण पुष्पाणि गृह्णन्ती सा कन्या गृहीता, भोगाय च तस्याः प्रार्थनां कर्तुं लग्नः । तदा तयोक्तम्–' भो आरामिक ! यदाहं परिणयिष्यामि तदा प्रथममहं तत्र समीपे समागमिष्यामि" । तदाऽऽरामिकेण तद्वचनं स्वीकृत्य सा मुक्ता । क्रमेण च सा निजगृहं प्राप्ता ।

अथ कतिचिद्दिवसानन्तरं सा कन्या तत्पित्रा केनचिद्युवा सह परिणायिता । तस्यां रात्रौ सा निजवृत्तान्तं स्वभर्त्रे निवेद्य तस्याज्ञां चादायारामिकस्य पार्श्वं गन्तुं मार्गे चलिता । पथि तस्याः केचिच्चौरा मिलिताः । तया तेभ्योऽपि निजवृत्तान्तो निरूपितः । तदा तैरपि मुक्ता पथ्यग्रे चचाल । इतस्तस्याः पथि राक्षसा मिलिताः । राक्षसैरपि तस्याः सत्यं वृत्तान्तं श्रुत्वा सा मुक्ता । क्रमेणारामिकपार्श्वे वाटिकामध्ये सा समागता । तदा तामागच्छन्तीं दृष्ट्वा स तत उत्थाय तां

च निजभगिनीं कथयित्वा तस्याः सन्मुखं समागत्य मिलितः। ततस्तस्यै वस्त्राभरणादीनि दत्वा स तां पश्चात्प्रेषितवान्। पश्चाद्वलमाना राक्षसैरपि किंचिद्दत्वा सा मुक्ता। पश्चात्तस्याः सत्यवचनैस्तुष्टैश्चौरैरपि सा किंचिद्दत्वा मुक्ता। एवं क्रमेणैषा गृहं प्राप्ता। सत्यवचसा भर्त्रापि सा सन्मानिता।

तत् श्रुत्वा समाजनानां मध्यात्तेन चौररूपेण चाण्डालेनोक्तम्–" अहो कीदृशास्ते चौरा मूर्खाः ? यैरीदृशी नूतनपरिणीता सयौवना वस्त्राभरणालंकृता कन्या मुक्ता।" तत् श्रुत्वाऽभयकुमारेण चिन्तितम्–" नूनमयं चाण्डाल एव चौरः, अनेनैवाम्रफलं गृहीतं संभवति।" ततस्तं चाण्डालं राज्ञः पार्श्वे समानीयाऽभयकुमारेणोक्तम्–" हे स्वामिन्नयमेवाम्रफलस्य चौरः संभवति। तदा राजा तं चाण्डालं पृच्छति–" भो चाण्डाल! त्वया केन प्रकारेणाम्रफलं गृहीतम् ?" तदा तेनापि सत्यमुक्तम्–" हे स्वामिन्! मया आकर्षिणीविद्ययाऽऽम्रफलं गृहीतमस्ति स्वभार्याया दोहदपूरणार्थम्।

तत श्रुत्वा श्रेणिकेनोक्तम्—" तामाकर्षिणीं विद्यां मम शिक्षय"। तदा स मातङ्गः सिंहासनोपरिस्थस्य राज्ञः पुरः स्थित्वा वारंवारं मन्त्रविद्यां ददाति परं राज्ञो मुखे सा नायाति। तद् दृष्ट्वाऽभयकुमारमन्त्रीश्वरेणोक्तम्–" हे राजन्! विद्या यदि विनयेन गृह्यते तदैव साऽऽयाति नान्यथा। उक्तं च—'विनयेन विद्या ग्राह्या, पुष्कलेन धनेन वा। अथवा विद्यया विद्या, चतुर्थं नैव कारणम् ॥१॥' अत एनं सिंहासने समुपाविश्य गुरुं च कृत्वा यूयं च स्वयमग्रे स्थित्वा मुखेनैवं वदथ यथा—'भो गुरो। मां विद्यां पाठयत। इत्येवं करणतो विद्या समायास्यति'। तदा राज्ञाऽपि तथैवं कृतम्। तत्क्षणमेव तस्य विद्या समायाता। ततोऽभयकुमारवचनतो राजा तं चौरदण्डान्निर्मुक्तं चकार। एवं विनयत एव विद्या

सफला जाता । अतो विनयवद्भिर्विनयेनैव विद्या ग्राह्या ॥ (२१)

॥ इति विनयोपरि श्रेणिकनृपकथा समाप्ता ॥

अथ द्वाविंशतितमत्रयोविंशतितमप्रश्नोत्तरमाह—

प्रश्नः—(श्रीगौतमस्वामी पृच्छति–"हे कृपासागर ! हे परमेश्वर ! हे भगवन् ! केन कर्मणा अर्थो विनश्यति ?" २२)

उत्तरः—( तदा कृपानिधिर्महावीरप्रभुः कथयति–हे गौतम ! )

गाथा—जो दाणं दाऊणं, चिंतइ हा कीस मए इयं दिन्नं । होऊण वि धणरिद्धि, अचिरावि हु नासए तस्स ॥३८॥

व्याख्या—यः पुरुषो दानं दत्वा हृदये एवं चिन्तयति, यथा–'हा इति खेदे मयैतद्दानं कथं दत्तं ?' इति यः पश्चात्तापं करोति, तस्य गृहाल्लक्ष्मीः स्तोककालेन याति गच्छति, धनदत्तसुतसुधनवत् ॥३८॥

प्रश्न—( श्रीगौतमस्वामी पृच्छति–" हे दयानिधे ! हे वीतराग ! हे कारुण्यपुण्यवसते ! केन कर्मणा अर्थो मीलति ?" २३ )

उत्तरः—( तदा श्रीवीरपरमात्मा कथयति–हे गौतम ! )

गाथा—थोवे धणेवि हु सत्तो, देइ दाणं पवट्टइ परेवि । जो पुरिसो तस्स धणं, गोयम ! संमिलइ परे जम्मे ॥३९॥

व्याख्या:—यः पुरुषो निजे स्तोके धने सत्यपि स्वशक्त्या तस्य सुपात्रे दानं दत्ते, पुनरन्यस्य पार्श्वाच्च दापयति, तस्य पुरुषस्य हे गौतम ! परजन्मनि लक्ष्मीः संमिलति, समुद्रदत्तपुत्रमदनवत् ॥३९॥

(तयोः) तत्सम्बन्धमाह—

दक्षिणदेशे दक्षिणमथुरायां नगर्यां धनदत्तनामा श्रेष्ठी वसति । स कोटीश्वरो विद्यते । तस्य सुधननामा पुत्रोऽस्ति । स प्रत्यहं व्यसनमायं करोति । इत उत्तरमथुरायामेकः समुद्रदत्ताख्यो व्यवहारी वर्तते । तेन सह स व्यापारं करोति । क्रयाणकानां पंचशतशकटप्रमाणानां राशिं प्रवहणेषु भृत्वा स समुद्रमध्ये चलति । पुनः स व्याजे धनं ददाति । तथैव किंचिद्धनं स निधानेऽपि रक्षति ।

अथैकदा दाहज्वरेण धनदत्तो मृतः । तदा सम्बन्धिभिः सुधनस्तस्य पट्टे स्थापितः । एवं स सुधनः कुटुम्बभारं निर्वहति । एकदा स सुधनः स्वर्णकुण्डिकां नीरेण भृत्वा स्वर्णसिंहासनोपरि च स्थित्वा स्नानं करोति । स्नानानन्तरं च सा स्वर्णकुण्डिका तत्स्वर्णसिंहासनं चाकाशे उड्डीय गते । ततोऽसौ देवपूजां कर्तुं लग्नः । देवपूजानन्तरं च तद्देवगृहं देवबिम्बं च परिकरयुतं सर्वमुड्डीयाकाशे गतम् । तस्मिन् समये प्रवहणभंगस्य सन्देशः समागतः । ततोऽसौ भोजनं कर्तुमुपविष्टः । भोजनानन्तरं द्वात्रिंशत्कचोलिकासहितः स सुवर्णस्थालोऽप्युड्डीयाकाशे गन्तुं लग्नः । तदा सुधनेन झगिति हस्तेन स स्थालो गृहीतः । तदा तस्य स्थालस्यैकः खण्डस्तस्य हस्ते स्थितः, परं स्थालस्तूड्डीय गतः । एवं तस्य सर्वापि लक्ष्मीर्गता । जातश्च स निर्धनः ।

तदा कश्चिदेको नर आगत्य तं वदति-" तस्य शिरसि मम लक्षद्रव्यस्य देयं वर्तते, तन्मां प्रयच्छ ।" तद् श्रुत्वा तेन निधानं निष्कासितं, तदा तदपि [१]सर्वं तेन भस्मीभूतं दृष्टम् ।

अथ तद्दुःखात्स गृहं त्यक्त्वा देशान्तरं प्रति चलितः । पथि च पर्वतोपरि चटित्वा तेन पतितुं प्रारब्धं, तदा तत्र स्थितेन केनचिदृषिणा स निवारितः । कथितं च-" हे सुभग ! त्वं मरणसाहसं मा कुरु । यतः कुमरणतस्त्वं व्यन्तरो भविष्यसि" इति श्रुत्वा पर्वततः समुत्तीर्य स मुनिं वन्दित्वा स्थितः । तदा मुनिस्तं प्रति कथयति-"कर्मणः कोऽपि न छुटति, यतः-' कर्मणो हि प्रधानत्वं, किं कुर्वन्ति शुभा ग्रहाः । वसिष्ठदत्तलग्नोऽपि, रामः प्रव्रजितो वने ॥१॥ आपद्गतं हससि किं द्रविणान्ध मूढ, लक्ष्मीः स्थिरा न भवतीह किमत्र चित्रम् । किं त्वं पश्यसि घटीं जलयन्त्रचक्रे, रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ २ ॥' अतस्त्वं लक्ष्मीसम्बन्धि दुःखं मा कुरु । लक्ष्मीरस्थिरा पुनरनर्थानां मूलमस्ति " एवं प्रतिबोधितः स श्रेष्ठी स्थालस्य खण्डं पार्श्वे रक्षयित्वा तस्य मुनेः पार्श्वे दीक्षां जग्राह ।

क्रमेण पठितो गीतार्थश्च जातः । ततस्तस्यावधिज्ञानं समुत्पन्नम् । ततोऽसौ मह्यां विहरन् क्रमेणोत्तरमथुरायां समुद्रदत्तस्य गृहे समागतः । यावत्स तत्रेतस्ततः पश्यति, तावत्तेन गृहैककोणे सा स्वर्णकुंडिका पतिता दृष्टा, स्वर्णसिंहासनमपि पतितं दृष्टं, एवं सर्वमप्यात्मीयं वस्तु समुपलक्ष्य स मुनिः समुद्रदत्तं प्रति कथयति -"भो श्रेष्ठिन् । एतानि सर्वाणि वस्तूनि त्वया कारापितानि वा तव पूर्वजेन कारापितानि ?" तदा श्रेष्ठिनोक्तम् "मयैवैतानि कारापितानि सन्ति ।" तदा ऋषि-

[१] अहीं पापना उदयनु वर्णन करवुं.

णोक्तम्–त्वमस्मिन् खण्डैकवर्जिते स्थाले कथं भोजनं करोषि ?" तत् श्रुत्वा श्रेष्ठिनोक्तम्–"अस्मिन् स्थाले खण्डो न लगति" तदा मुनिना निजझपोलिकातस्तं खण्डं निष्कास्य तस्मिन् स्थाले स दत्तः, तदैव स खण्डः स्थाले लग्नः। श्रेष्ठ्यादिसर्वकुटुम्बिनां हृदि चमत्कारो जातः। तदा श्रेष्ठी तं मुनिं वन्दित्वा पृच्छति–"भो मुने! अत्र किं कारणं?" मुनिर्ब्रूते–"त्वं मिथ्या कथं जल्पसि ? इयं भवदीया ऋद्धिर्नास्ति, एषा ऋद्धिर्मदीयैव वर्तते। मया सा समुपलक्षितास्ति, अतस्त्वं सत्यं कथय।"

तदा तेन सत्यं प्रोक्तम्–"हे मुने! मद्गृहे समागताया अस्या ऋद्धेरष्टौ वर्षाणि जातानि सन्ति"। तदा मुनिर्वदति "यदा मम पिता स्वर्गे गतस्तदादित इयं लक्ष्मीर्मद्गृहाद् गता। तद्वैराग्याच्च मया दीक्षा गृहीता। अवधिज्ञानेन च ज्ञात्वाऽहमत्रागतोऽस्मि"। तदा श्रेष्ठिनोक्तम् "भो मुने! त्वमिदं सर्वं गृहाण, सुखेन च भुंक्ष्व।" तदा मुनिनोक्तम् "हे समुद्रदत्त! मम पश्यत एव या लक्ष्मीर्गता सा मया कथं गृह्यते।" तदा मुनिर्निजं पूर्वभवं कथयति—

श्रीपुरे नगरे जिनदत्ताभिधः श्रेष्ठी वसति। तस्य पद्माकरगुणाकरनामानौ द्वौ पुत्रावभूताम्। पित्रा निजमरणसमये ताभ्यां कथितं यदत्र मह्या अधोगतं निधानं युवाभ्यां तुल्यतया विभज्य गृह्णीयम्। अथ पितुर्मरणानन्तरमेकेन वृद्धभ्रात्रा रात्रौ प्रच्छन्नतया तन्निधानं निष्कास्य गृहीतम्। द्वितीयदिने तेन निजलघुभ्रातरं प्रति कथितम्–"अद्यावां तन्निधानं निष्कासयावः" तेनापि कथितं "वरम्"।

अथ तत्र गत्वा ताभ्यां निधानकृते भूमिः खनिता, परं ततो निधानं न निःसृतम्। तदा मायाविना वृद्धभ्रात्रा प्रोक्तम्–"अहो इतः केनापि पुरुषेण निधानं चोरितमस्ति"। तदा वृद्धभ्रातृकपटं ज्ञात्वा लघुभ्राता मूर्च्छितः। यदा स सचेतनो

जातस्तदा वृद्धभ्रात्रा कथितम्-"त्वया सर्वं धनं हृतम्।" एव विवादे जाते लघुभ्राता वृद्धभ्रात्रा धिजः (अग्निपरीक्षा) कारितः। एवं लघुभ्रातृवचनादहं मृत्वायं सुधनो जातः। स मम लघुभ्राता च मृत्वाऽयं तव पुत्रो मदनाख्यो जातः। अथ मम लक्ष्मीर्मदनस्य पुण्यवशान्मदनगृहे समागता। तत् श्रुत्वा समुद्रदत्तेन दीक्षा गृहीता। अथ मदनो गृहपतिर्जातः। मुनिर्वदति-मया दानं दत्वा पश्चात्तापः कृतस्तेन मल्लक्ष्मीर्मम गृहाद्गता, मदनेन च स्वयं दानं दत्तं, अन्यस्मादपि च दापितं, तस्मात्तस्य बह्वीर्लक्ष्मीर्मिलिता। पश्चान्मदनोऽपि श्राद्धधर्ममङ्गीकृत्य स्वर्गसुखं च भुक्त्वा मनुष्यीभूय चारित्रं गृहीत्वा मोक्षं गतः॥

॥ इति सुधनमदनयोः कथा सम्पूर्णा ॥ (२२-२३)

अथ चतुर्विंशतितमं प्रश्नोत्तरमाह-

चतुर्विंशतितमप्रश्नः—(श्रीगौतमस्वामी पृच्छति-"हे दीनबन्धो! हे कृपासागर! हे परमकृपालो भगवन्! केन कर्मणा लक्ष्मीः स्थिरा भवति?" २४)

उत्तरः—(तदा दयालुर्भगवान् कथयति-हे [1]गौतम!)

गाथाः—जं जं नियमणइत्थं, तं तं साहूण देइ सद्धाए। दिन्नेइ य नाणुतप्पइ, तस्स थिरा होइ धनरिद्धी॥ ४०॥

व्याख्याः—यद्यद्वस्तु स्वमनसि रोचते तत्तद्वस्तु चेतसद्भावेन साधुभ्यः प्रदीयते दत्वा च यः पश्चात्तापं न करोति

[1] श्रीमद्वीरं जिनाधीश गौरवर्णं गुणोत्तमम्। तरुण करुणाकार, महिमाश्रितमाश्रये ॥१॥ (पदाद्यक्षरैः श्रीगौतमनाम)

तस्य पुरुषस्य धनऋद्धिः स्थिरा भवति, शालिभद्रवत् ॥ ४० ॥

तत्सम्बन्धमाह—

मगधदेशे राजगृहीनगरीसमीपे शालिनामैको ग्रामो वर्तते । तत्र धन्नाभिधा काचिदेकाऽऽभीरी वसति । तस्याः संगमाभिधः सुतोऽस्ति । स संगमो गोवत्सांश्चारयति । एकदा श्राद्धदिने तेन संगमेन मातुः पार्श्वे भक्षणाय क्षैरेयी मार्गिता । तदा मात्रोक्तम्-" वत्स ! क्षैरेयीमहं कुतो निष्कामयामि ?" इति कथयित्वा सा रुरोद । तदा तद्गृहपार्श्ववर्तिन्यश्चतस्रो वनितास्तत्र समागत्य तस्या रोदनकारणं च विज्ञाय तां प्रति कथयामासुः-" भो धन्ने ! त्वं मा रुदनं कुरु, वयं तुभ्यं क्षैरेयीसामग्रीं दास्यामः " इत्युक्त्वैकया दुग्धं, अन्यया शालि, परया च घृतमपरया च शर्करेत्यादिसामग्री दत्ता । तदा क्षैरेयीं निष्पाद्य स्थाले च परिवेष्य स्वपुत्राय संगमायोक्तम्-" हे पुत्र ! त्वमिमां क्षैरेयीं भुंक्ष्व " इत्युक्त्वा सा कार्यार्थं परिवेश्मिकगृहे गता । संगमश्च तामुष्णां क्षैरेयीं शीतलां करोति ।

इतस्तस्मिन्नवसरे तस्य भाग्यवशात्कश्चिन्मासोपवासी मुनिस्तस्य गृहे पारणकदिवसे आहारार्थं समागतः । तं साधुं दृष्ट्वा संगमो भव्यभावनयोत्थाय तत्सर्वमपि परमान्नं तस्मै ददौ । साधोर्गमनानन्तरं धन्ना स्वगृहान्तरागता । पुत्रस्य पार्श्वे च स्थालीं क्षैरेयीरहितां निरीक्ष्य सा चिन्तयामास 'नूनमनेन परिवेषिता सकलापि क्षैरेयी भक्षिताऽस्ति, अतोऽहमपरां क्षैरेयीं तस्य परिवेषयामि' इति विचार्य तया तस्यां स्थाल्यामपरा क्षैरेयी परिक्षिप्ता । सा क्षैरेयी संगमेन भक्षिता । ततोऽसौ

वत्सान् चारयितुं वने ययौ ।

अथ तस्य मात्रा धन्नया चिन्तितम्—'अहो मम पुत्रो नित्यमेतावतीं क्षुधां सहते, येनैतावती क्षैरेयी तेन भक्षिता' एवं मातुर्दृष्टिदोषतो जातविसूचिकया स तस्यामेव रात्रौ मृत्वा राजगृहनगर्यां गोभद्रश्रेष्ठिनो गृहे भद्राभिधभार्यायाः कुक्षौ पुत्रत्वेनोत्पन्नः । रात्रौ स्वप्नमध्ये तया शालिक्षेत्रं दृष्टं, तेन तस्य जन्मानन्तरं पितृभ्यां तस्य 'शालिभद्र' इति नाम दत्तम् । यौवने च पित्रा स द्वात्रिंशत्कन्याभिः सह परिणायितः । ताभिः सह स विषयसुखानि भुनक्ति ।

अथैकदा गोभद्रश्रेष्ठिना वैराग्यतः स्वमनसि चिन्तितं 'यदयं संसारो जलतरङ्गवल्लोलोऽसारश्चास्ति' इति विचार्य स गुरुसमीपे दीक्षां गृहीत्वा कियत्कालं च चारित्र्यं प्रतिपाल्य मनुष्यायुः संपूर्णीकृत्य मृत्वा देवोऽभूत् । स गोभद्रदेवः पुत्रमोहात्सर्वदा तस्य वधूनां कृते नवनवाभरणवस्त्रभृतास्त्रयस्त्रिंशत्पेटिका नित्यं स्वर्गान्मुञ्चति । एवं स शालिभद्रो विविधान् दिव्यभोगान् सर्वदा भुनक्ति, येन तस्य सूर्योद्गमनास्तकालमपि न ज्ञायते । सर्वमपि गृहव्यापारं तस्य माता भद्रैव करोति ।

इतः कश्चिद्वैदेशिको नेपालदेशात्सपादलक्षमूल्यान् षोडश रत्नकम्बलान् समानीय तत्र राजगृहे विक्रयार्थं चतुष्पथे सर्वलोकान् प्रति दर्शयामास । परं बहुमूल्यत्वात्तान् कोऽपि न गृह्णाति । श्रेणिकराज्ञापि बहुमूल्यभीतेन ते निजराज्ञीकृतेऽपि न गृहीताः ।

अथ क्रमेण स वैदेशिकः विषण्णः सन् चलन् भद्राया गृहद्वारसमीपे समागतः । तदा भद्रया ते सर्वेऽपि रत्नकम्बला मूल्येन गृहीताः । अर्द्धमर्द्धांश्च विभज्य वधूभ्यः प्रदत्ताः । ताभिर्वधूभिश्च तैर्निजचरणानि प्रमार्ज्य ते गृहखालमध्ये प्रक्षिप्ताः ।

अथ श्रेणिकपट्टराज्ञ्या चेल्लणया रत्नकम्बलवार्ता श्रुता । ततस्तयैको रत्नकम्बलो राज्ञः पार्श्वे मार्गितः । तदा राज्ञा ते रत्नकम्बलव्यापारिणं पुनराहूय कथितमेकं रत्नकम्बलं मे मूल्येन देहि । व्यवहारिणा प्रोक्तम्–"ते सर्वेऽपि रत्नकम्बला भद्रया मूल्येन गृहीताः । तत् श्रुत्वा राज्ञा भद्रापार्श्वादेको रत्नकम्बलो मार्गितः । तदा भद्रयोक्तम्–"ते रत्नकम्बला मया खण्डशः कृत्वा मम द्वात्रिंशद्वधूभ्यः प्रदत्ताः ताभिश्च तैर्निजचरणानि प्रमार्ज्य क्षालमध्ये क्षिप्ताः" । तत् श्रुत्वा विस्मितो राजा शालिभद्रस्य समृद्धिं द्रष्टुं तस्य गृहे समागतः ।

तदा भद्रा सप्तभूमिकोपरिस्थशालिभद्रस्य पार्श्वे गत्वा तं कथयति–" हे वत्स ! त्वं मनाग् नीचैः समागच्छ, अस्माकं राजा श्रेणिकोऽस्मद् गृहे समागतोऽस्ति ।" तदा शालिभद्रस्तं श्रेणिकराजानं किंचित्क्रयाणकं विज्ञाय कथयति–" भो मातस्त्वमेव तत्क्रयाणकमिच्छितमूल्यदानेन गृहाण, तद्विषये तत्र मदागमनस्य किञ्चिदपि प्रयोजनं नास्ति । " तदा भद्रयोक्तम्–" हे पुत्र ! श्रेणिकाभिधं किञ्चित्क्रयाणकं नास्ति, परं स श्रेणिकोऽस्मन्नगराधिपतिर्नृपोऽस्ति, अतस्त्वं नीचैरागत्य तस्मै प्रणामं कुरु ।" तदा शालिभद्रस्तद्वचसा नीचैरागत्य नृपाय प्रणामं करोति । हृष्टेन राज्ञा शालिभद्रो निजोत्सङ्गे गृहीतः । परं राज्ञः स्पर्शमसहमानः स व्याकुलीभूतः । तद्विज्ञाय भद्रया नृपं प्रति कथितम्–" हे स्वामिन्नयमतीव सुकुमालः शालिभद्रो भवत्स्पर्शेन व्याकुलीभवति, अत एनं मुञ्चत ।" अथ नृपेण मुक्तोऽसौ तूर्णं निजसप्तमभूमौ गतः ।

अथ भद्रया राजा भोजनार्थं निमन्त्र्य तत्र स्थापितः । ततोऽसौ श्रेणिकस्तस्य गृहाङ्गणे स्नानं कर्तुं लग्नः । इतो राज्ञः करांगुलित एका मणिमुद्रिका निःसृत्य गृहकूपिकायां पतिता । तदा राज्ञा भद्रायै प्रोक्तम्–"भो भद्रे ! ममैका मणिमुद्रिका

कराङ्गुलितो निःसृत्यास्यां कूपिकायां पतितास्ति, ततस्तां निष्कास्य मम पुनः समर्पय।" तदैका भद्रादिष्टा दासी राजानं कूपिकापार्श्वे समानीय वदति–"हे स्वामिन् ! कूपिकास्थेष्वेतेष्वाभरणेषु भवन्मुद्रिकां सम्यक् समुपलक्ष्य यूयं स्वीकुरुत"। तदा तस्यां कूपिकायाममूल्यमाभूषणसमूहं निरीक्ष्य विस्मितो राजा कथमपि निजमुद्रिकां समुपलक्ष्य गृहीतवान्। अथ चमत्कृतो राजा दासीं प्रति पृच्छति–"भो दासि ! एतावन्तीमान्याभूषणानि कस्य सन्ति ?" दास्योक्तम् "हे स्वामिन् ! एतत्सर्वं द्रव्यं शालिभद्रेण निर्माल्यीकृत्यात्र क्षिप्तमस्ति"। अथैवं तस्यर्द्धितो विस्मितो राजा भोजनं कृत्वा स्वस्थाने गतः।

अथ तत्र स्थितः शालिभद्रश्चिन्तयति–'नूनमहमल्पपुण्यकोऽस्मि, येन ममोपर्यपि राजा वर्तते" इति वैराग्यात् स प्रत्यहमेकैकां स्त्रियं त्यजति।

अथ तस्य शालिभद्रस्यैका भगिनी पूर्वं धन्नाख्यव्यवहारिणा परिणीतास्ति। सा निजभ्रातुर्वैराग्यदशां स्मृत्वैकदा रुदितुं लग्ना। तदा स्नानार्थं स्थितेन धन्नेन तां रुदतीं दृष्ट्वा पृष्टम्–"भो प्रिये ! त्वं कथं रोदिषि ?" तदा तया कथितम्–"मद्भ्राता दीक्षेच्छुः प्रत्यहमेकैकां स्त्रियं त्यजति। तदुदन्तस्मृतितो मे नेत्राभ्यामश्रूणि गलन्ति।" तत् श्रुत्वा धन्नः कथयति–"हे प्रिये ! नूनं तव भ्राता कातरोऽस्ति, य एवं रङ्कवत्प्रत्यहमेकैकां स्त्रियं त्यजति, यदि स संविग्नस्तर्हि एकवेलमेव कथं सर्वाः स्त्रियो न त्यजति ? तदा तद्भार्ययोक्तम्–"हे स्वामिन् ! यद्येवं ब्रूथ तर्हि यूयमेव कथं न त्यजथ ? भवतामप्यष्टौ स्त्रियः सन्ति, जगति सर्वेऽपि कथयितुं चतुराः कर्तुं च दुष्करा एव॥" तत् श्रुत्वा वैराग्यमापन्नेन धन्नेन कथितम्–"हे प्रिये ! त्वदनुमत्याऽद्यप्रभृति मया सर्वा अपि स्त्रियस्त्यक्ता अतस्त्वमपि दूरे भव"।

अथ धन्नस्तत उत्थाय शालिभद्रपार्श्वे गत्वा तमपि प्रतिबोध्य तेन सह श्रीश्रेणिकराजकृतमहोत्सवः श्रीवीरप्रभुपार्श्वे दीक्षां जग्राह । एवं तौ द्वावपि कृतषष्टाष्टमदशमपक्षमासोपवासतपसौ क्रमेणातीवदुर्बलौ जातौ । क्रमेण विहरन्तौ तौ श्रीवीरप्रभुणा सह राजगृहनगरे प्राप्तौ । तपःपारणके च भिक्षावसरे तौ श्रीवीरपार्श्वेऽनुज्ञार्थं प्राप्तौ । तदा श्रीवीरेण शालिभद्रायोक्तम्—"भो शालिभद्रमुने ! अद्य तव मातुर्हस्तके पारणकं भविष्यति ।"

अथ तौ क्रमेण भद्राया गृहे समागतौ परं तत्र श्रीवीरप्रभुवन्दनार्थं गमनोत्सुकैः कैरपि तौ नोपलक्षितौ, भिक्षार्थं न निमन्त्रितौ च । ततः पश्चाद्वलितौ तौ नगरप्रतोल्यां समागतौ । तदा शालिभद्रस्य पूर्वभवमात्रा धन्नया नगरान्तर्गच्छन्त्या तौ दधिदानपूर्वकं प्रतिलाभितौ । तद् गृहीत्वा तौ श्रीवीरसमीपे समागत्याकथयताम्—"हे भगवन् ! भवदुक्तं अद्य न जातम् ।" तदा श्रीवीरेणोक्तम्—"भो शालिभद्र ! ययाऽभीर्या युष्मद्भ्यां दधिदानं दत्तं, सा शालिभद्रस्य पूर्वभवमातैवास्ति ।"

अथ तौ द्वावप्यनशनं विधाय वैभारगिर्युपरि स्थितौ । तदनन्तरं परिवारसहिता द्वात्रिंशद्वधूभिश्च परिवृता भद्रा तत्र वैभारगिरौ गत्वा ताभ्यां वन्दनां कृत्वा स्वगृहे गता । तौ द्वावपि अनशनं कृत्वा स्वायुःक्षये सर्वार्थसिद्धिविमाने देवत्वं प्राप्तौ । ततश्च्युत्वा नरभवं प्राप्य तौ मोक्षं यास्यतः । एवंविधं [१]सुपात्रदानमाहात्म्यं श्रुत्वा तद्विषये भव्यैर्यतितव्यम् ।

॥ इति सुपात्रदाने शालिभद्रकथा सम्पूर्णा ॥

---

१ स्वर्भोगभोगी १ नृपः क्रयाणकं २, सुवर्णनिर्माल्यभूत् सगादिवत् ३ । भूपस्य मानेऽप्यपमानचिन्तनम् ४, शालेर्महाश्चर्यभिदे चतुष्टयं ॥१॥ पूर्वं न मंत्रो १, तदा विचारः २, स्पर्धा न केनापि ३ फले न वाञ्छा ४ । पश्चात्तापो ५ ऽनुरागो ६ न गर्वो ७ हर्षो ८

अथ पञ्चविंशतितमषड्विंशतितमप्रश्नोत्तरमाह—

पञ्चविंशतितम प्रश्नः—( श्रीगौतमस्वामी पृच्छति—"हे करुणासिन्धो ! हे कृपासागर ! हे भगवन् ! केन कर्मणा पुत्रो न जीवति ?" २५)

उत्तरः—( तदा कृपालुः श्रीमहावीरप्रभुः कथयति—)

गाथा—पसुपंखीमाणुसाणं, बाले जोवि हु विच्छोहइ पावो । सो अणवच्चो जायइ, अह जायइ तो वि णो जीवइ ॥ ४१ ॥

व्याख्या:— यः पुमान् पशुपक्षिमानुषाणां बालानां विच्छोहं वियोगं कारयति पुनर्योऽतिपापी भवति सोऽनपत्यो जायते, अर्थात्तस्यापत्यानि न भवन्ति, अथ चेद्भवन्ति तथापि न जीवन्ति, यथा ऋद्धिवासनगरे वर्धमानश्रेष्ठिनः पुत्रो देदाख्योऽनपत्यो महादुःखितश्च जातः ॥ ४१ ॥ (२५)

षड्विंशतितम प्रश्नः—( श्रीगौतमस्वामी पृच्छति—"हे सर्वज्ञ ! हे प्रभो ! हे दुःखिजनवत्सल ! केन कर्मणा जनो बहुपुत्रो भवति ?" २६ )

उत्तरः—( तदा श्रीवीरप्रभुः कथयति—हे गौतम ! )

---

स्तथा संगमके बभूव ॥२॥ अनुत्तरं दानमनुत्तरं तपाऽप्यनुत्तरं मानमनुत्तरं यशः । श्रीशालिभद्रस्य गुणा अनुत्तरा अनुत्तरं धैर्यमनुत्तरं पदम् ॥ ३ ॥

गाथा—जो होइ दयापरमो, बहुपुत्तो गोयमा भवे पुरिसो ।

व्याख्या:—यः पुरुषः परमदयावान् भवति, स पुरुषो हे गौतम ! बहुपुत्रको भवति, तस्य पुरुषस्य बहवः पुत्रा जायन्ते, यथा पूर्वोक्तवर्द्धमानश्रेष्ठिनो वृद्धपुत्रस्य देसलस्य बहवः पुत्राः संजाताः ।

अथ तयोर्देसलदेदयोः कथामाह—

ऋद्धिवासाख्ये नगरे वर्द्धमानाभिध एको वणिक् वसति । तस्य द्वौ पुत्रावभूताम् । तयोरेको वृद्धो देसलाख्यः परमदयावान्, द्वितीयश्च देदाख्योऽतीवनिर्दय आसीत् । पित्रा द्वावपि परिणायितौ । देसलस्य देविनी नाम्नी भार्या देदस्य च देमत्यभिधा भार्या वर्तते । देसलस्तु लक्ष्मीमुपार्जयति, धर्मं करोति सुखं च भुनक्ति । एवं स समये समये त्रिवर्गान् साधयति । देदस्तु धर्मं मुक्त्वा केवलमर्थमुपार्जयति सुखं च भुंक्ते ।

अथ क्रमेण देसलस्य बहवः पुत्राः संजताः । ते चातीव मनोहरा गुणवन्तश्च बभूवुः । एवं सा देविनी निजपुत्रान् लालयति निजोत्संगे च स्थापयति । एवं तां निजपुत्रान् लालयन्तीं दृष्ट्वा देमती निजहृदये चिन्तयति—“ अरे । ममैकोऽपि पुत्रो नास्ति ” । निजभर्तारं देदं प्रति च सा कथयति–“ अरे आवयोः पुत्रसुखं नास्ति । यत उक्तम्–‘गेहंपि तं मसाणं, जत्थ न दीसंति धूलिधूसरिया । उट्ठंत पडंत रडंतो, दो तिन्निवि डिंभा पमोयकरा ॥ १ ॥ अतो हे स्वामिन् ! कमपि पुत्रोपायं कुरु ! ”

१ धर्म १ अर्थ २ अने काम ३ नुं वर्णन करवुं. २ गृहमपि तत्स्मशानं, यत्र न दृश्यन्ते धूलिधूसरिताः । उत्तिष्ठन्तः पतन्तो रुदन्तो, द्वौ त्रयोऽपि डिम्भाः प्रमोदकराः ॥१॥

अथ तद्वचसा देदेन सत्यवादिनामा यक्ष आराधितः। तं पूजयित्वा स्वयं चोपवासं कृत्वा तत्र स्थितः, कथितं च तेन तस्मै—"भो यक्ष! यदि त्वं मे पुत्रं दास्यसि तदैवाहमितो गमिष्यामि"। एवमेकादशमे उपवासे स यक्षः प्रत्यक्षीभूय तं प्रत्येवमवादीत्—"हे देद! त्वं ममोपर्येव कथं कष्टं करोषि? देवदानवव्यन्तरा अपि कृतं कर्म दूरीकर्तुं समर्था न भवन्ति। तवान्तरायकर्म विद्यते, अतस्तव भाग्ये पुत्रो नास्ति, तेनाहं ते कथं पुत्रं यच्छामि?" देदेनोक्तम्—"चेत्त्वं पुत्रं मे नो दास्यसि तदाहं तव प्राणहत्यां दास्यामि"। तदा यक्षेणोक्तम्—"तव पुत्रो भविष्यति परं स शीघ्रं मरिष्यति" इत्युक्त्वा स यक्षोऽदृश्यो जातः।

अथ देदो निजगृहे समागत्य स्ववनितायै कथितवान्—"देववरदानाद् तव पुत्रो भविष्यति" इत्युक्त्वा स किंचिद् हृष्टः किंचिच्च विषण्णः सन् पारणं कृतवान्। अथ तद्दिवसादारभ्य तस्य भार्यायाः कुक्षौ गर्भसंभवोऽभूत्। पश्चान्नवभिर्मासैस्तस्याः पुत्रो जातः. दशदिवसानन्तरं स्वजनान् भोजयित्वा तेन तस्य पुत्रस्य सोला इति नाम प्रतिष्ठितम्। ततोऽसौ देदः पुष्पफलयुतस्तं बालकं गृहीत्वा यक्षं पूजयितुं यक्षालये गतः। यक्षस्तु कपाटौ दत्वा स्थितः। तेन बहव उपाया कृताः, परं कपाटौ नोद्घटितौ। ततो विषण्णोऽसौ पश्चाद्वलित्वा स्वभवने समागतः।

अथ तस्यामेव रजन्यां स बालो मृतः। तस्य शोकेन देददेमत्यौ मूर्छया भूमावपतताम्। तदा वृद्धो भ्राता देशलस्तावाश्वास्य तयोर्भोजनं कारयित्वा कथयति—"भो भ्रातः! इमे मदीया पुत्रास्त्वदीया एव ज्ञातव्याः" इत्यादि कथयित्वा तेन तयोः शोको दूरीकारितः।

इतस्तस्मिन्नवसरे कश्चिद्विद्याचारणश्रमण आकाशमार्गे गच्छंस्तयो रुदनं श्रुत्वा तत्रागतः। सर्वैरपि स वन्दितः। ऋषिणापि तेभ्यो [1]धर्मलाभो दत्तः। तत उपदेशदानानन्तरं मुनिना देदाय कथितम्–"त्वं शोकं त्यज, धर्मं च भज, धर्मेण सर्वमपि शुभं भविष्यति। उक्तं च–"धम्मेण ऋद्धि धणदस्स तुल्ला, बुद्धि विसाला धवला य कित्ति। पुत्ता विणीया घरणी सुरूवा, मणिच्छियं लब्भइ सव्वमेव॥ १॥" (धर्मेणर्द्धिर्धनदस्य तुल्या, बुद्धिर्विशाला धवला च कीर्तिः। पुत्रा विनीता गृहिणी सुरूपा मन इप्सितं लभ्यते सर्वमेव॥ १॥

अथ श्रेष्ठी मुनये पृच्छति—"हे भगवन्! एताभ्यां द्वाभ्यामपि मे पुत्राभ्यां पूर्वभवे किं कर्मोपार्जितमस्ति, तत्कथ्यताम्?" ततो गुरुः कथयति—

अस्मिन्नेव नगरे इतस्तृतीये भवे विहूणनिहूणाभिधौ द्वौ कुलपुत्रावभूताम्। तयोरेको वृद्धभ्राता धर्मवान् दयावांश्च वर्तते। द्वितीयो भ्राता वनमध्ये गत्वा मृगाणां बालकान् वियोजयति। पुनर्हंसानां शुकानां च बालकान् पञ्जरे क्षिपति। पुनरन्यस्मिन् ग्रामे च गत्वा मनुष्यपुत्राणां क्रयविक्रयं करोति।

अथैकदा तेन कस्यचित्क्षत्रियस्यैकः पुत्र उत्पाटितः। क्षत्रियेण तद् ज्ञातं यदनेनेदं कर्म कृतमिति। तद् ज्ञात्वा क्षत्रि-

---

१ दीर्घायुर्भव वर्ण्यते यदि पुनस्तन्नारकाणामपि, सन्तानाय च पुत्रवान् यदि पुनः तत् कुर्कुटानामपि। अर्थो म्लेच्छकुलाश्रिते नरपतौ सम्पूर्ण उद्वीक्ष्यते, तस्मात्सर्वसुखप्रदोऽस्तु भवता श्रीधर्मलाभः श्रिये॥ १॥ सकलकुशलवल्ली पुष्करावर्तमेघो दुरिततिमिरभानु' कल्पवृक्षोपमानः। भवजलनिधिपोतः सर्वसम्पत्तिहेतुः, स भवतु सततं वः श्रेयसे धर्मलाभः॥ २॥ दीर्घायु' स्वस्ति धनवान् पुत्रवान् प्रमुखा' परे, आशीर्वादा अमी सर्वे, धर्मलाभस्य किंकरा'॥ ३॥

येण हतोऽसौ निहूणो मृत्वा नरकं गतः। निहूणस्तु भ्रातुर्मरणं श्रुत्वा वैराग्यादनशनं विधाय सौधर्मे सुरो जातः। ततश्च च्युत्वा तव गृहे स देशलनामायं तव पुत्रोऽभूत्। निहूणजीवस्तु नरकान्निःसृत्याऽयं तव देदाभिधो द्वितीयः पुत्रोऽभूत्। परं पूर्वभवे पशुपक्षिबालानां वियोगकरणादत्राऽपुत्रकोऽयं जातः। देशलेन च तृषार्तानां क्षुधार्तानां च दया कृता, तेनायं च सपुत्रको जातः।"

इति गुरोर्वचांसि श्रुत्वा जातजातिस्मरणो देसलो निजपूर्वभवं दृष्ट्वा सम्यक्त्वमूलं श्राद्धधर्मं च प्रतिपद्य क्रमेण च दीक्षां गृहीत्वा तपः कर्तुं लग्नः। अथ स विद्याचारणमुनिर्नभोमार्गेण गतः। स देसलमुनिरप्यनशनं विधाय मृत्वा च प्रथमे देवलोके देवो जातः। उक्तं च–" जीवदया जिणवर कही, जे पाले नर नारी। पुत्र हुवे सूरा सबल, तेहने रंग मोझारि" ॥ १ ॥

॥ इति देसलदेदयोः कथा समाप्ता ॥

अथ सप्तविंशतितम प्रश्नोत्तरमाह—

**सप्तविंशतितमप्रश्नः**–( श्री गौतमस्वामी पृच्छति–"हे करुणानिधे ! हे दयासागर ! हे भगवन् ! केन कर्मणा जनो बधिरो भवति ? )"

उत्तरः—( तदा श्रीमहावीरप्रभुः कथयति—हे गौतम ! )

गाथा—जो असुयं भणइ सुयं, सो बहिरो जायए पुरिसो ॥ ४२ ॥

व्याख्याः—यः पुरुषोऽश्रुतमपि किंचिन्मया श्रुतमिति कथयति स पुरुषो बधिरो जायते ॥ ४२ ॥

अष्टाविंशतितमप्रश्नः—( अथ अष्टाविंशतितमं प्रश्नोत्तरमाह—गौतमस्वामी पृच्छति–हे परमकृपालो भगवन् ! केन कर्मणा नरो जात्यन्धो भवति ? २८ )

उत्तरः—( भगवान् श्रीमहावीरप्रभुः कथयति—हे गौतम ! )

गाथा–अदिट्ठं चिय दिट्ठं, जो किर भासिज्ज धम्मनिरवेक्खो । सो जच्चंधो जायइ, गोयम ! नियकम्मदोसेणं ॥ ४३ ॥

व्याख्या–यः पुरुषोऽदृष्टमपि वस्तु मया दृष्टमिति कथयति, यश्च पुनर्धर्मनिरपेक्षं धर्मापेक्षया रहितं वचनं किलेति निश्चयेन भाषते, स पुरुषो हे गौतम । निजकर्मदोषेण जात्यन्धो जायते ॥ ४३ ॥

द्वयोरुपरि एकामेव कथामाह—

महेन्द्रपुरे गुणदेवनामा श्रेष्ठी वसति । तस्य गायत्री नाम्नी भार्या, तयोर्बहुकालानन्तरं पुत्रोऽभूत् । परं स स्वकर्मयोगेन बधिरोऽन्धश्च जातः । पित्रा तस्य नाम न कृतं, तेन कश्चित्तं बधिर इति कथयति, कश्चिच्च तं अन्ध इत्यपि कथयति । एवं द्वाभ्यां नामभ्यां स प्रसिद्धो जातः । पित्रा मन्त्रयन्त्रतन्त्रादयो बहव उपचारास्तस्य कृते कारिताः । परं स मुखेन किंचिदपि न ब्रूते । न च कर्णाभ्यां किंचिदपि शृणोति । तदा तस्य पितरौ चिन्तयतो यदावाभ्यां पूर्वभवे किं पापं कृतं येनावयोरीदृशो [१]बधिरान्धः पुत्रो जातः ?

---

१ कामारंभपरिग्गहपरा भोगोवभोगत्थिणो, जे बंभव्वयधारिणो मुणिवरे हीलन्ति मोहातुरा । ते काणंधयकुंटमुंटबहिरा दारिद्दिणो रोगिणो, संसारे सुइरं सरन्ति सययं हीलिज्जमाणा जणा ॥१॥

इतस्तत्र कश्चिद् ज्ञानी गुरुर्वनमध्ये समवसृतः। तं वन्दितुं स गुणदेवश्रेष्ठी परिवारयुतो वने गतः। वन्दित्वा चाग्रे स स्थितः। तदा गुरुस्तं प्रति (धर्मोपदेशं) कथयति–"भो गुणदेव! त्वं निजं बधिरान्धं पुत्रं दृष्ट्वा कथं हृदि दुःखं करोषि? येन प्राणिना यत्कर्म कृतं, तस्य तत्कर्मेन्द्रोऽपि दूरीकर्तुं समर्थो न भवति। कृतं कर्म स्वयमेव प्राणी भुनक्ति"।

तत् श्रुत्वा गुणदेवः पृच्छति–"भो भगवन्! अयं पुत्रः केन कर्मणा बधिरान्धो जातः? तन्मयि कृपां विधाय कथयत?" तदा गुरुर्वदति—

अस्मिन्नेव नगरे वीरमनामैकः कुटुम्ब्यवसत्। परं सोऽधर्मी कूटभाषी परनिन्दां परदोषं च वदति। कस्यचिच्छिरसि कूटं कलंकं ददाति। अथैको सीमाडकराजा तस्य नगरस्य स्वामिनो वैरी वर्तते। ततो लोकास्तस्माद्राज्ञो भयं प्राप्नुवन्ति। इतः कौचिद् द्वौ पुरुषावेकान्ते परस्परं किंचिन्मन्त्रमालोचयतः। तदा वीरमस्तौ दृष्ट्वा तलारक्षपार्श्वे गत्वा कथयति 'यद्येतौ द्वौ पुरुषौ सीमाडकराजानमाकारयतः। तदा तलारक्षकेण तौ द्वौ पुरुषौ वन्धयित्वा राज्ञोऽग्रे स्थापितौ। राज्ञा ताभ्यां पृष्टम्–"युवाभ्यां किं मन्त्रमालोचितम्?" तदा ताभ्यामुक्तम्–"भो स्वामिन्! आवाभ्यां किंचिद् गृहकार्यमालोचितम्, अन्यत् किमपि मन्त्रं न कृतम्"। परं दुष्टेन वीरमेणोक्तम्–"स्वामिन्नेतावसत्यं वदतः"। ततो राज्ञा वीरमस्य वचनं सत्यं मत्वा तौ द्वावपि दण्डितौ।

अथैकदा पुनर्ग्रामादागच्छतः कस्यचित् श्रेष्ठिनो मार्गे स वीरमो मिलितः। तदा तं वीरमं प्रति श्रेष्ठिना प्रोक्तम्–"अस्ति मम गृहे समाधिः?" तदा तेन दुष्टेन वीरमेणोक्तम्–"तव गृहे कामदेवः प्रत्यहं याति तव वनितां च भुंक्ते"।

ईदृशं वचनं श्रुत्वा कुपितेन तेन श्रेष्ठिना राज्ञोऽग्रे स वृत्तान्त उक्तः। तदा क्रुद्धेन राज्ञा कामदेवस्य सर्वस्वं गृहीतम्। एवं बहुपापकर्ताऽसौ वीरमः कदाचित्केनचित् क्षत्रियेण मारिता मृत्वाऽयं तव गृहे जन्मान्धबधिरो जातोऽस्ति। अतोऽप्ययं बहु संसारं भ्रमिष्यति।

तां वार्तां श्रुत्वा तस्य पितरौ धर्मं कर्तुं लग्नौ। अथ स जन्मान्धबधिरोऽपि बहुदुःखं भुक्त्वा मृत्वा च दुर्गतिं गतः। अतः केनापि परनिन्दा न कार्या, परस्य च कलंको न देयः।

॥ इति वीरमकथा समाप्ता ॥

अथ एकोनत्रिंशत्तमं प्रश्नोत्तरमाह–

एकोनत्रिंशप्रश्नः—(श्री गौतमस्वामी पृच्छति–"हे परमकारुणिक! हे कृपासागर! हे भगवन्! केन कर्मणा नरस्य भुक्तमपि न जीर्यति तदस्मासु कृपां कृत्वा कथयत? २९)"

उत्तरः—(तदा कृपालुर्भगवान् कथयति-हे गौतम!)

गाथा—उच्छिट्ठमसुंदरयं, भत्तं तह पाणियं च जो देइ। साहूणं जाणमाणो, भुत्तंपि न जिज्जए तस्स ॥४४॥

व्याख्याः—यो जीव उच्छिष्टमसुन्दरं च भक्तं तथा पानीयं जानन् सन् साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति, यथा श्रीवासुपूज्यस्य मघवाभिध पुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धा-

भिन्नाना कुष्टिनी जाता साधोः कटुतुम्बकाहारदानात् ॥४४॥

रोहिणीकथा चेत्थम्—

श्रीवासुपूज्यमानस्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥१॥

श्रीचम्पापुर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति । तस्य लक्ष्मीनाम्नी राज्ञी सुशीला सदाचारा च वर्तते । तस्या अष्टौ पुत्राः सन्ति । अष्टानां पुत्राणामुपर्येका रोहिणीनाम्नी पुत्री वर्तते । सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती च जाता । अथ क्रमेण सा यौवनावस्थां प्राप्ता । ईदृशीं तां दृष्ट्वा राजा चिन्तयति—'नूनमियं रोहिणी वरयोग्या जाताऽस्ति ।

अथ राज्ञा स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः । तेऽपि च मण्डपे समागत्य स्थिताः । तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद्देवीव शिबिकायां स्थित्वा सखीभिः परिवृता तत्रागता । अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नामगोत्रबलवयोयशःप्रभृतीनां वर्णनं करोति । अथ तयाऽन्यान् सर्वानपि राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः । तस्य कण्ठे च तया निजवरमाला क्षिप्ता । ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तं च तया सह विवाह्य ततो भोजनवस्त्राभरणताम्बूलादि गृहीत्वा स्वगृहे गताः ।

अशोककुमारोऽपि तत्र कतिचिद्दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समागतः ।

तदा वीतशोकराज्ञा तस्य पुत्रप्रवेशमहोत्सवः कृतः, कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति ।

अथैकदा शुभे दिनेऽशोककुमारस्य राज्यं दत्वा वीतशोको राजा दीक्षां गृहीतवान् । ततोऽशोकराजा सुखेन राज्यं पालयति । क्रमेणाशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः ।

अथैकदा रोहिण्या सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्सङ्गे धृत्वा क्रीडयति । तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृतः । सा स्त्री रुदती विलापांश्च कुर्वन्ती तस्मिन् मार्गे समागता । तां दृष्ट्वा रोहिण्या राज्ञे पृष्टम्-" भो महाराज ! किमिदं नृत्यम् ? राजा जगाद-हे प्रिये ! त्वं साहंकारं वचनं मा ब्रूहि ?" रोहिण्योक्तम्-" स्वामिन्नहमहंकारं न करोमि । एवंविधं नृत्यं मया कदापि न दृष्टं, अतोऽहं पृच्छामि ।" तदा राज्ञोक्तमेतस्याः स्त्रियः पुत्रो मृतोऽस्ति । अत एवेयं रुदनं करोति ।" रोहिण्योक्तम्-"हे स्वामिन्नस्या रुदनं केन शिक्षितं भवेत् ?" तत् श्रुत्वा राज्ञोक्तम्-"तवाप्यहं रुदनं शिक्षयामि " इत्युक्त्वा रोहिण्युत्सङ्गस्थं तस्या लघीयांसं पुत्रं लोकपालाख्यं राजा निजहस्तेन भूमावपातयत् । तदा तत्रस्थाः सर्वे जनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः । परं रोहिण्या हृदि किञ्चिन्मात्रमपि दुःखं न जातम् ।

इतस्तं पतन्तं बालकं नगराधिष्ठितेन देवेन धृत्वा सिंहासने स स्थापितः । तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः-'नूनमयं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति ।'

इतस्तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भस्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ तत्र समागतौ । तदा राजा

परिवारयुतस्तौ वन्दितुं गतः। गुरुभ्यां च देशना दत्ता। देशनाश्रवणानन्तरं राज्ञा पृष्टम्-"भो भगवन्! अनया रोहिण्यैवंविधं किं तपः कृतं, येनेयं दुःखस्य वार्तामपि न जानाति। एतस्या अष्टौ पुत्राश्चत्वारश्च पुत्र्यो जाताः सन्ति। तथा ममापि तस्या उपर्यतीव स्नेहो वर्तते, अतस्तस्याः कथां युवां कृपां विधाय कथयतम्।" तत् श्रुत्वा गुरुः कथयति—

अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति। तस्य धनमित्रा नाम्नी च भार्यास्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री। सा कुरूपा दुर्भगा च जाता। एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति। तदा पित्रैकं मार्यमाण श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामी कृतः। सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः। तदा श्रेष्ठी विषादं करोति। विलपतीं पुत्रीं प्रति श्रेष्ठी कथयति-"हे पुत्रि। त्वं विलापं मा कुरु? गृहद्वारि स्थिता दानं देहि, धर्मं च कुरु, येन तव दुष्कर्मदोषः प्रलीयते।" अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति।

अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः। तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्। गुरुर्भणति-गिरनारनगरे पृथ्वीपालाभिधो राजासीद्। तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते। अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति। तस्मिन् समये कश्चिन्मासक्षपणपारणकः सागरनामा मुनिः समागच्छति। तं मुनिं दृष्ट्वा राज्या विचारितम्-'यदहमस्मै मुनये प्रासुकमाहारं ददामि।' एवं विचार्य तया गृहे समागत्य तं मुनिमाकार्य तस्मै कटुतुम्बकशाकं दत्तम्। मुनिना च तेनाहारेण पारणकं कृतम्। तद्भक्षणाच्च मुनिः पञ्चत्वं प्राप। शुभध्यानाच्च स देवलोके देवोऽभूत्। तां वार्तां ज्ञात्वा राज्ञा स्वदेशाद्राज्ञी निष्कासिता। पश्चात् सा राज्ञी मृत्वोष्ट्रिका जाता। पुनश्च सा मृत्वा

कुर्कुटी भूता। पश्चात् शृगाली जाता। ततो मृत्वा गृहगोधा, ततो मुषिका, ततो जलौका पश्चाच्च गणिका जाता। अष्टमे भवे चाण्डाली, नवमे भवे रासभी, दशमे भवे च गौर्जाता। तस्मिन् भवे वनमध्ये गुरुमुखान्नमस्कारमन्त्रं श्रुत्वा तस्य प्रसादान्मनुष्यभवे दुर्गन्धा नाम्नीयं तव पुत्री बभूव।

तत् श्रुत्वा दुर्गन्धाया जातिस्मरणं समुत्पन्नम्। तदा दुर्गन्धा निजपूर्वभवं दृष्ट्वा करौ च योजयित्वा पृच्छति–"हे भगवन्! एतस्माद् दुःखादहं कथं निस्सरामि? तत्कथ्यताम्।" तदा मुनिभिरुक्तम्–"त्वं दुःखभञ्जनं रोहिण्या व्रतं कुरु।" तयोक्तम्–"हे भगवन्! केन विधिनाहं तद् व्रतं करोमि।" मुनिनोक्तम्–"शृणु, रोहिणीनक्षत्रदिने श्रीवासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावत् उपोषं कुरु। एवं शुभध्यानयुततपःप्रभावात्तव शुभं भविष्यति। पश्चाच्च त्वया तत्तपउद्यापनं विधेयं, येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्।" तत् श्रुत्वा दुर्गन्धा मुनिं पृच्छति–"हे भगवन्! तस्य सुगन्धराजस्य वृत्तान्तं मयि कृपां विधाय कथयत।" तदा मुनिर्वदति—

सिंहपुरे सिंहसेनो राजा, तस्य कनकप्रभाभिधाना राज्ञी वर्तते। तस्य दुर्गन्धाख्यः पुत्रोऽभूत्। स क्रमेण यौवनं प्राप्तः। परं कस्यापि मनसि स न रोचते। एकदा श्रीपद्मप्रभस्तीर्थंकरस्तत्रागतः। तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति तदा श्रीमर्वज्ञप्रभुः कथयति—

नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति। तस्योपर्येका शिला वर्तते। तत्रैको मुनिर्मासक्षपणादि तपः करोति। तत्तपःप्रभावाच्चाखेटकस्याखेटकं निष्फलं याति। तदा स लुब्धकस्तस्य मुनेरुपरीर्ष्यां करोति। एकदा स ऋषिः

पारणार्थं ग्राममध्ये प्राप्तः। तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शीलाऽतीवोष्णा विहिता। अथ स ऋषिः पारणकं विधाय शिलाया उपरि स्थितः। बहुतापात्स ऋषिः शुभध्यानेन केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः।

अथ ऋषिघातात्स लुब्धकः कुष्ठी जातः। पश्चान्मृत्वा स सप्तमीं नरकावनीं गत्वा, ततो मत्स्यो भूत्वा गोपालो जातः। परं स दरिद्री भूतः। केनचिद्वणिजा च स नमस्कारं शिक्षितः। पश्चाद्दावानलमध्ये ज्वलितः। [१]नमस्कारप्रभावाच्च त्वं राज्ञः पुत्रोऽयं दुर्गन्धाख्योऽभूः। तत् श्रुत्वा जातिस्मरणं प्राप्य स प्रभुं पृच्छति–"हे भगवन्! कथमहमथ सुगन्धो भवामि? तस्योपायं कृपां विधाय कथयत।" तदा श्रीतीर्थंकरेण भणितम्–"त्वं सप्तमासाधिकानि सप्तवर्षाणि यावद्रोहिणीतपः कुरु? पश्चाच्च तस्य तपस उद्यापनं कुरु?" तत् श्रुत्वा तेन रोहिणीतपः कृतम्, यस्य प्रभावात् स सुगन्धोऽभूत्।

इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता। पश्चान्मृत्वा सा देवोऽभूत्। ततश्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवपुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता। पूर्वकृततपःप्रभावादियमाजन्म यावद् दुःखं न वेत्ति, पुनर्हे अशोकराजेन्द्र! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते तस्यापि कारणं शृणु—

सिंहसेनराज्ञा सुगन्धपुत्राय राज्यं दत्वा स्वयं च दीक्षां गृहीत्वा श्रीजिनधर्मं पालयित्वा पुष्कलावतीविजये पुण्डरीकिण्यां नगर्यां विमलकीर्तिराज्ञः पुत्रोऽर्ककीर्तिनामाभूत्। क्रमेण स चक्रवर्ती जातः। राज्यं भुक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुः क्षये च द्वादशमे देवलोकेऽच्युतेन्द्रोऽभूत्, ततश्च्युत्वा त्वमयमशोकराजा जातः।

१ नवकारमंत्रनुं स्वरूप तथा तेना प्रभावनुं वर्णन करवुं.

रोहिण्याश्च वल्लभोऽभूः । युवाभ्यां रोहिणीतपःकरणात्पुत्रयोः परस्पराधिकः स्नेहो जातः ।

अथ त्व पुत्राणां कारणं शृणु—

मथुरायामग्निशर्माख्यो विप्रो वसति । तस्य सप्त पुत्राः । परं ते दरिद्रिणः । एकदा पाटलीपुत्रनगरे ते सप्तापि भ्रातरो भिक्षार्थं गच्छन्ति । तदा वाटिकामध्ये कश्चिद्राजकुमारः कन्दर्पावतारः क्रीडति । तं दृष्ट्वा शिवशर्मा स्वबान्धवान् वक्ति—"भो भ्रातरो विधिना कियदन्तरं कृतमस्ति । अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं च भिक्षार्थं गृहे गृहे भ्रमामः ।" तदैकेन भ्रात्रोक्तम्—"अस्मिन् विषये कस्योपालंभो दीयते ? पूर्वभवेऽस्माभिः पुण्यं न कृतं, अनेन राजकुमारेण च सुकृतं कृतं, अतोऽसौ सुखं भुनक्ति ।" तदा तैः सर्वैरपि ब्राह्मणपुत्रैर्जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता । मृत्वा च ते सप्तमे देवलोके देवा जाताः । ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन् । तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लकविद्याधरोऽभूत् । स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीर्जिनप्रतिमा अपूजयत्, धर्मं चाकरोत् । स विद्याधरो मृत्वा सौधर्मे देवो जातः । ततश्च च्युत्वा तवायमष्टमो लोकपालाख्यपुत्रो बभूव ।

अथ चतसृणां पुत्रीणां सम्बन्धं शृणु—

वैताढ्यपर्वते एको विद्याधर आसीत् । तस्य चत्वारः पुत्रिका अभवन् । ता महारूपवत्यो गुणवत्यश्चासन् । एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिर्दृष्टाः, आलापिताश्च—"भो पुत्र्यो यूयं धर्मं कुरुध्वम्, युष्माकमायुरेकदिनप्रमाणमेव विद्यते"। ताभिरुक्तम्—"हे भगवन् ! एकदिनमध्ये को धर्मो भविष्यति ?" तदा गुरुभिरुक्तम्—'यूयमद्य शुक्लज्ञानपञ्चमीतपः

कुरुध्वम् ? अद्यैव दिने पञ्चम्या उपवासं कृत्वा गृहे गत्वा देवपूजां च कृत्वा पुण्यस्यानुमोदनां कुरुध्वम् ?" ताभिरपि गृहे गत्वा तथैव कृतम् । अथ तस्यामेव रात्रौ विद्युत्पातात्ताश्चत्वारोऽपि मृत्वा प्रथमदेवलोके देवा जाताः । ततश्च च्युत्वा तवैताः पुत्र्यः संजाताः । अथैताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रुप्यकुम्भसुवर्णकुम्भगुरू नत्वा निजगृहे समागतः ।

कियत्कालानन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः । उक्तं च–रोहिणीतप पंचमीतप, गुरुआ ए तप जाणी । दुखित होय करी सुख हुवे, बोले केवल नाणी ॥ १ ॥

॥ इति रोहिणीअशोकराज कथा ॥

अथ त्रिंशत्तमं प्रश्नोत्तरमाह—

त्रिंशत्तमप्रश्नः—( श्रीगौतमस्वामी पृच्छति—हे दयानिधे ! हे कृपासिन्धो ! हे भगवन् ! केन कर्मणा जीवः कुष्ठी भवति ? ३० )

उत्तरः–( तदा परमकृपालुर्वीरप्रभुः कथयति–हे गौतम ! )

गाथाः—महुघायं अग्गिदाहं, अंकं वा जो करेइ पाणीणं । बालारामविणासी, कुट्ठी सो जायइ पुरिसो ॥ ४५ ॥

व्याख्या—( यो नरो मधुमक्षिकाया आलयं पातयति, पुनर्यो दावानलं ददाति, पुनर्यः प्राणिनां गवादीनामंकं चिह्नं

करोति, लघुआरामान् वनवृक्षान् विनाशयति, त्रोटयति मोटयति तथा पुष्पादीनि चुंटयति स पुरुषो भवान्तरे कुष्टी भवति गोविन्दपुत्रगोशलवत् ॥ ४५ ॥

अथ तस्य गोशलस्य कथामाह–

श्रीप्रतिष्ठानपुरे गोविन्दनामा गृही वसति। तस्य भार्या गौरीति नाम्नी। तयोः पुत्रो गोशलाख्यो जातः। परं स कुव्यसनी निर्दयश्चासीत्। एकदा स एकाकी वनमध्ये गत्वा यष्टिना मध्वालयं पातयामास। पुनः स दावानलं दत्वा शशकादिजीवान् व्यापादयामास। पुनः स गोशलो वृषभादीन् पशून् अंकयति, डंभं ददाति, नवकिसलयान् वृक्षांश्च छेदयति उन्मूलयति च। तस्यैतत्कार्येण रुष्टैर्लोकैस्तस्य पितुरुपालम्भो दत्तः। तदा पित्रा पुत्रमाहूय तस्य शिक्षा दत्ता। परं स तस्य शिक्षां न मन्यते। एवं स सर्वेषामुद्वेगजनको जातः। क्रमेण तस्य पितरौ देवीभूतौ।

अथ स गोशलो निरंकुशहस्तिवदुच्छृंखलो बभूव। एकदा स राज्ञो वनवाटिकायां गत्वा नारिंगादीनुन्मूलयितु लग्नः। तदा तलारक्षेण बन्धनपूर्वकं तं गृहीत्वा स राज्ञोऽग्रे मुक्तः। राज्ञा तस्य सर्वस्वं गृहीत्वा मुक्तः। पुनरेकदा स राज्ञो वाटिकामध्ये गत्वा सुकोमलां वनस्पतिं छेदयति। तदा वनपालस्तं बध्ध्वा कुट्टयामास।

ततो वनपालेन राज्ञोऽग्रे गत्वा कथितम्–"हे स्वामिन्। युष्माकं वाटिका गोशलेन विनाशिता।" तदा राज्ञा तस्य गोशलस्य हस्तौ छेदितौ। एवं स दुःखी सन् बहुविधं पश्चात्तापं करोति। उक्तं च–[1]माय बाप वडातणी, सीख न माने

१ जो न मानै वडोकी सीख, ते मागे खपरा लईने भीख ॥

जेय । कर्मवशे दुखिया थया, पछी पछताये तेह ॥ १ ॥ ”

अथ गोशलो मृत्वा तत्रैव पद्मश्रेष्ठिनो गृहे पुत्रत्वेनोत्पन्नः । गोरा इति तस्य नाम दत्तम् । तस्य जन्मत एव गलत्कुष्टो रोगो जातः । विज्ञा बहून्यौपधानि कारितानि परं प्रत्युत तस्य रोगो वृद्धिं प्राप । एकदा तत्र पद्मसाराभिधो मुनिः समागतः । तं वन्दितुं सर्वेऽपि नगरलोका गताः । पद्मश्रेष्ठ्यपि तं वन्दितुं गतः । ऋषिणोक्तम्–“ जीवः कृतकर्मवशात्सुखी च दुःखी च भवति ।

अथ तस्मिन्नवसरे श्रेष्ठिनोक्तम्–“ हे भगवन् ! अनेन मम पुत्रेण किं पापकर्म कृतमस्ति ? ” ऋषिर्वक्ति–“ हे श्रेष्ठिन् ! स पूर्वभवेऽत्रैव गोविंदगौर्योर्गोशलाख्यः पुत्रोऽभूत् । तेन पूर्वभवे दवो दत्तः, वृक्षाश्छेदिताः, मधुमक्षिकालयः पातितः, पशवोऽङ्किताः । एवं बहुविधं पापकर्म कृत्वा मृत्वा सोऽयं तव कुष्टरोगी पुत्रो जातः ” । इति श्रुत्वा पद्मश्रेष्ठिना पुत्रं प्रति कथितम्–“ हे पुत्र ! पूर्वभवे त्वयैवं कर्म कृतमस्ति ” । इति श्रुत्वा स जातिस्मरणं प्राप । ततोऽसौ मुनिपार्श्वे निजपातकं निन्दयित्वाऽनशनं गृहीत्वा मृत्वा च प्रथमदेवलोके देवोऽभूत् ।

॥ इति गोशलकथा संपूर्णा ॥

अथ एकत्रिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—( श्रीगौतमस्वामी पृच्छति–हे कारुणिक ! हे परमेश्वर ! हे दयासागर । केन कर्मणा स एव जीवः कुब्जो भवति ? ३१ )

उत्तरः-( तदा परमकृपालुर्भगवान् कथयति-हे गोयम ! )

गाथा—गोमहिसं खरकरहं, अइभारारोपणेण पीडेइ । एएण पावकम्मेण, गोयम । सो भवे खुज्जो ॥ ४६ ॥

व्याख्या:-यः पुरुषो वृषभमहिषखरौष्ट्राणामतिभारारोपणेन पीडयति, तेन पापकर्मणा हे गौतम ! स जीवः कुब्जो भवति, धनावहपुत्रधनदत्तवत् ॥ ४६ ॥

अत्र धनदत्तधनश्रियोः कथा यथा—

भूमिमण्डननगरे शत्रुदमनो राजा राज्यं करोति । तत्र नगरे धनाभिधः श्रेष्ठी । तस्य च धीरूनाम्नी वनिता वर्तते । स श्रेष्ठी भाटकेनाजीविकां करोति । तस्य गृहे बहुपोट्टिकोष्ट्रिकखरमहिषाणां संग्रहोऽस्ति । स लोभेन तेषामुपरि बहुभारं वाहयित्वा बहुभाटकं समर्जयति ।

एकदा कश्चित्साधुस्तस्य गृहे आहारार्थं समागतः । तस्मै दानं दत्वा तेन शुभं कर्मोपार्जितम् । प्रान्ते स स्वायुः पूर्णीकृत्य तस्मिन्नेव नगरे धनावहश्रेष्ठिनो गृहे धनदत्ताख्यः पुत्रोऽभूत् । परं स कुब्जो जातः । स धनदत्तो वाणिज्यकलायां कुशलो बभूव ।

अथ तस्मिन्नेव नगरे कश्चिद्धनाख्यः श्रेष्ठी वसति । तस्य गृहे धीरूजीवो मृत्वा धनश्रीनाम्नी पुत्रिका जाता । सा धनश्री रूपवती गुणवती यौवनवयः प्राप्य पूर्वस्नेहवशात्तं कुब्जं धनदत्तं भर्तारं वाञ्छति । तस्य धनश्रेष्ठिनो द्वितीयाप्येका

पुत्र्यासीत् । सापि कर्मवशात्कुब्जा वर्तते ।

एकदा तस्य गृहे एको नैमित्तिकः समागतः । तेन नैमित्तिकेन स्वनिमित्तज्ञानेन तस्मै धनश्रेष्ठिने कथितम्—" गृह-स्वामिन् ! यो नर इमां धनश्रियं परिणेष्यति स नगरश्रेष्ठी भविष्यति । अथेदृशीं वार्तां श्रुत्वा धनपालनामा कश्चिद्व्यवहारी धनश्रियं मार्गयामास । तदा तस्याः पित्रोक्तम्—"वरं इमां धनश्रियमहं दास्यामि, कुब्जस्य धनदत्तस्य चेमां कुब्जां कन्यां दास्यामि ।

एवं द्वयोः कृते तेनैकमेव लग्नं गृहीतम् । परं सा धनश्रीर्धनदत्तमेव वाञ्छति । तेन तया धनश्रिया तन्मनोरथपूर्वक-मेको यक्ष आराधितः । तदा सन्तुष्टेन यक्षेण तस्यै प्रोक्तम्—" लग्नसमयेऽहं सर्वेषां जनानां दृष्टिबन्धं करिष्यामि येन धन-दत्तेन सह तव पाणिग्रहणं भविष्यति " । तत् श्रुत्वा सा धनश्रीर्हृष्टा, यक्षश्चैवं तस्यै वरो दत्वाऽदृश्यो जातः ।

ततो लग्नदिने यक्षेण धनश्रियो धनदत्तेन सह सम्बन्धः कारितः, कुब्जायाश्च धनपालेन सह सम्बन्धः कारितः । एवं तौ द्वावपि परिणीय ततो निर्गतौ । धनदत्तस्तु धनश्रियं दृष्ट्वा हृष्टः, परं धनपालो निजां कुब्जां स्त्रियं दृष्ट्वा मनस्यतीव दूनः ।

अथ धनपालो धनदत्तं प्रति वक्ति—" त्वयेयं या धनश्रीः परिणीता सा मामकीना भार्याऽस्ति । तव भार्या नास्ति । ततस्तां मम प्रतियच्छ । चेत्त्वं न दास्यसि तदाहं राज्ञोऽग्रे यास्यामि " तत् श्रुत्वा धनदत्तेन कथितम्—" सा तु मम भार्याऽस्ति, न तव, सा मां परिणीता " इति परस्परं कलहं कुर्वन्तौ तौ राज्ञोऽग्रे गतौ । राज्ञा तौ द्वावपि तयोर्गृहे प्रेष यित्वा धनश्रीराकारिता, पृष्टं च राज्ञा तस्यै—" हे धनश्रि ! अयं विनिमयः केन कृतः ? त्वं सत्यं वद " । तदा धन·

श्रियोक्तम्—" हे राजन् ! मया यक्ष आराधितस्तेन च संतुष्टेनैवं कृतमस्ति " । तत् श्रुत्वा राज्ञा चिन्तितम्—" यद्देवेन कृतं तदन्यथा नैव भवति " इति विचार्य तयोः सम्बन्धिन आकार्य राज्ञोक्तम्—" योऽयमुदन्तः समुद्भूतः स देवेनैव कृतोऽस्ति, अतः कैरपि रोषो नैव कार्यः ।

अथ तौ द्वावपि मनसि सन्तुष्टीभूय स्वस्वगृहे स्थितौ । अस्मिन्नवसरे चतुर्ज्ञानधरो धर्मरुचिनामा मुनिस्तत्र समागतः । तदा सर्वेऽपि लोकाः सपरिवारास्तं वन्दितुं गताः । गुरुणापि तेभ्यो धर्मदेशना दत्ता । धर्मदेशनानन्तरं धनदत्तेन गुरुभ्यः पृष्टम्—" हे भगवन् ! केन कर्मणाहं कुब्जो भूतः, इयं च मम भार्या धनश्रीरपि केन कर्मणा ममोपर्यधिकस्नेहवती जाता ? पुनरस्माकं लक्ष्मीभोगसुखादिकं च कथं जातम् ? तत्कथयत " ।

मुनिनोक्तम्—" शृणु पूर्वभवे युवां धनधीरूनामानौ स्त्रीभर्तारावभूताम् । वृषभोष्ट्राद्युपर्यतिभारभरणेन त्वं कुब्जो बभूव । पुनस्तस्मिन्नेव भवे त्वया साधवे दानं दत्तं, तन्माहात्म्यात्त्वया लक्ष्मीर्भोगाश्च लब्धाः । पूर्वभवस्नेहादस्मिन् भवेऽपि युवयोरधिकस्नेहः परस्परं बभूव । " तां वार्तां श्रुत्वा स जातिस्मरणं प्राप्य सम्यक्त्वमूलं श्राद्धधर्मं च प्रतिपद्य निजगृहे गतः । ततो धर्ममाराध्य सुपात्रे च दानं दत्वा मृत्वा च स देवलोके देवोऽभूत् ।

॥ इति धनदत्तधनश्रियोः कथा ॥

अथ द्वात्रिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—( अथ श्रीगौतमस्वामी पृच्छति–हे कृपासागर ! हे तीर्थेश्वर ! हे भगवन् । केन कर्मणा जीवस्य दासत्वं

भवति ? ३२ )

उत्तरः—( तदा भव्यजनाम्भोजरविः श्रीवीरप्रभुः कथयति–हे गौतम ! )

गाथा—जाइमणो उम्मत्तमणो, जीवो संथुणेइ जो कयग्घो य । सो इंदभूइ ! मरिउं, दासत्तं वच्चए पुरिसो ॥ ४७ ॥

व्याख्या—यः पुरुषः जातेः कुलस्य मदं करोति, पुनर्य उन्मत्तमना भवति, यश्च परनिन्दामात्मप्रशंसां च करोति, स पुरुषो [१]नीचैर्गोत्रकर्मोपार्ज्य हे इन्द्रभूते! मृत्वा दासत्वं प्राप्नोति । पुनर्यो नरो जीवानां क्रयविक्रयं करोति, पुनः कृतघ्नो[२] भवति, केनापि कृतमुपकारं नैव मन्यते, स पुरुषो हे इन्द्रभूते ! मृत्वा दासत्वं लभते । अत्र ब्रह्मदत्तकथा—

हस्तिनागपुरे सोमदत्तनामा पुरोहितो वसति । तस्य सोमदत्ता भार्या । तयोर्बलिभद्रनामा पुत्रो जातिमदेन सर्वजनान् तृणवन्मन्यते । मार्गेऽपि जलच्छटां दत्वा चलति । स राजपुत्रभृत्यस्वपुत्रादिस्पर्शतोऽपि स्नानं करोति । पुनर्मातङ्गे दृष्टिपतिते सति स सचेलः स्नानं करोति, प्रायश्चित्तं च चिन्तयति, अन्यजात्युपरि च द्वेषं वहति । केवलं स्वजातिमेव प्रशंसति । एवमतिशौचकरणतः स पित्रोरुद्वेगकरः संजातः । लोकास्तं हसन्ति । एकदा तस्मै पित्रोक्तम्–" भो पुत्र ! त्वं लोकव्यव-

१ " परात्मनिन्दाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य " इति तत्त्वार्थे ।

२ पृथ्वी उवाच–न च मे पर्वता भारा न च मे सप्तसागराः । कृतघ्नश्च भीरुश्च महाभारा वसुन्धरा ॥ १ ॥ अहीं कृतघ्नीपणानुं वर्णन करवुं.

हारं कुरु, जातिमदं च मा कुरु?" एवमुक्तोऽप्यसौ तदमन्यमानो मत्तहस्तिवच्चलति।

एवं कियत्यपि काले गते सति तस्य पिता मृतः। तदा राज्ञाऽन्यः पुरोधाः कृतः। एवं स लोकविरुद्धाचरणेनात्रैव पदभ्रष्टोऽभूत्। सहास्येन लोकेनापि तस्य ब्रह्मदत्त इति नाम दत्तम्। अथ क्रमेण स निर्धनः कृतघ्नश्च संजातः। ततोऽसौ वृषभादीनां क्रयविक्रयं कृत्वा स्वाजीविकां करोति।

अथैकदा यदा स मार्गे याति, तदा लोकैस्तस्य हास्यं कृत्वोक्तम्—"भो ब्रह्मदत्त! एतानि सर्वाणि तृणानि मातङ्गैः स्पृष्टानि सन्ति, तर्हि अधुना त्वया सचेलं स्नानं कथं न क्रियते?" तत् श्रुत्वा स तं मार्गं त्यक्त्वाऽन्यमार्गे पतितः। तत्र मार्गे तु तस्य मातङ्गाश्चाण्डालाश्चापि सन्मुखमेव मिलिताः। तदा स कोपातुर आक्रोशवचनानि[1] कथयितु लग्नः। तत्क्षणमेव मातङ्गैर्मिलित्वा स गृहीतः। ततस्ते तं यदा मारयितुं लग्नास्तदा स "भो मातङ्ग! अहं युष्माकं दासोऽस्मि" इत्यादि दीनवचनजल्पनतस्तैः स मुक्तः। पश्चात्साऽज्ञानतपः कृत्वा मृत्वा च ज्योतिष्केषु देवत्वं प्राप।

ततश्च्युत्वा पद्मखण्डे नगरे कुन्ददन्ताभिधाया गणिकायाः कुक्षौ स मदनाख्यपुत्रत्वेनोत्पन्नः। अथैकदा स मदनो निजमनसि चिन्तयति—"अहो मया किं पापं कृतम्? येनाहं हीनजातिर्गणिकापुत्रो जातः" एव यावत्स चिन्तयति तावत्तत्र कियत्कालेन कश्चित्केवली गुरुः समागतः। स मदनस्तं गुरुं नत्वा पृच्छति—"हे भगवन्! मया हीनजातित्वं कथं

[1] ददतु ददतु गालिं गालिवन्तो भवन्तो, मयि तदभावाद् गालिदानेऽसमर्थः। जगत् विदितमेतद् दीयते विद्यमानं, न हि शशकविषाणं कोऽपि कस्मै ददाति ॥ १ ॥

लब्धम् ?" तदा ज्ञानी गुरुः कथयति—"हे मदन ! त्वया पूर्वभवे जातिमदो विहित आसीत्, पुनस्त्वया परनिन्दाकरणादि पापमपि कृतमस्ति, अतः कारणात्त्वं गणिकापुत्रो जातोऽसि।" तत् श्रुत्वा मदनः प्राह–"हे स्वामिन् ! चेद्यूयं मां योग्यं जानीथ तर्हि मह्यं दीक्षां यच्छत।" तत् श्रुत्वा केवलिना ज्ञानेन तं गणिकापुत्रं योग्यं विज्ञाय तस्मै दीक्षा दत्ता। ततोऽसौ दुष्करं तपस्तप्त्वाऽऽयुःक्षयेऽनशनं गृहीत्वा शुभध्यानवशेन मोक्षे गतः॥

॥ इति मदनब्रह्मदत्तकथा ॥

अथ त्रयस्त्रिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—(अथ श्रीगौतमस्वामी भव्यजनहितार्थं पृच्छति–'हे कृपासिन्धो ! हे जगन्नाथ ! हे कृपालो भगवन् ! केन कर्मणा स एव जीवो दरिद्रो भवति ?) ३३

उत्तरः—( तदा कृपासागरः श्रीवीरप्रभुः कथयति–हे गौतम ! )

गाथा—विणयहीणो चरित्तवज्जिओ, दानगुणविउत्तो य। मणमाइदंडजुत्तो, पुरिसो दरिद्दिओ होइ ॥४८॥

व्याख्याः—यः पुरुषो विनयरहितस्तथा चारित्रवर्जितो नियमरहितः, पुनर्दानगुणेन च रहितो भवति, तथा त्रिदण्डयुक्त इति मनसाऽऽर्त्तध्यानं[1] रौद्रध्यानं च चिन्तयति, वचसा दुर्वचनं ब्रूते, कायया चापि कुबुद्धिरूपां चेष्टां यः करोति स पुरुषो मृत्वा दरिद्री भवति, निष्पुण्यकवत् ॥४८॥

१ अहीं आर्त्तध्यान, रौद्रध्यान, धर्मध्यान तथा शुक्लध्याननुं वर्णन करवुं.

तथाहि—

हस्तिनागपुरेऽरिमर्दनो राजा राज्यं करोति। तत्रैव सुबुद्धिनामैकः श्रेष्ठी वसति। तस्य बन्धुमती नाम्नी भार्या। तस्या मनोरथाख्यश्च पुत्रः। स बालः पितृभ्यां शतैर्मनोरथैर्वर्द्धयते। अथैकदा पिता तस्य पुत्रस्य शिक्षां ददाति—"हे पुत्र! त्वं देवगुरुभ्यः प्रणामं कुरु।" परं स कुबुध्या न करोति। वृद्धानां प्रति त्वं विनयं कुर्वित्युक्तोऽपि स विनयं न करोति।

एकदा पित्रा स गुरोः पार्श्वे समानीतः। तदा गुरुभिस्तं प्रत्युक्तम्—"भो वत्स! त्वं [1]नियमं पालय।" तेनोक्तमहं नियमं पालयितुं न शक्नोमि। अथ कतिचिद्दिवसानन्तरं तस्य पिता मृत्वा देवोऽभूत्। अथ तस्य मनोरथस्य गृहे कृपणत्वतः कोऽपि भिक्षुर्नायाति।

अथैकदा स एकाक्येव कंचिद् ग्रामं प्रति चलितः। मार्गमध्ये च तस्य चौरा मिलिताः। तैर्मारितोऽसौ मृत्वा दरिद्र-कुले कस्यचिद्दरिद्रस्य पुत्रो जातः। तत्र च तस्य निष्पुण्यक इति नाम जातम्। स निष्पुण्यको लोकानां पशूंश्चारयति, तथा जनानां भारं मस्तके वहति। एवं स सर्वेषां लोकानां सेवाकारकोऽभूत्। तथापि स स्वोदरं दुःखेन पूरयति।

एकदा स द्रव्योपार्जनाय देशान्तरे चलितः। मार्गे स वनमध्ये एकं षण्मुखं देवस्यालयं दृष्ट्वा धनप्राप्त्यर्थमुपवासपूर्वकं तं देवमाराधयामास। तदा सप्तमे दिवसे षण्मुखेन देवेनागत्य तस्मै भणितम्—"त्वमितः स्थानाद्याहि। तव भाग्यमध्ये लक्ष्मीर्नास्ति।" तदा तेन निष्पुण्यकेन भणितमहमत्रैव तव स्थानाग्रे मरिष्यामि।

---

१ अहीं नियम पाळवाथी थता लाभ जणाववा, तेमज कुंभारनी टाल जोवानो नियम पाळवाथी नियम राखनारने थएलो लाभ समजाववो।

इति तद्वचः श्रुत्वा देवेनोक्तम्–"भो निष्पुण्यक! अत्र नित्यं ममाग्रे स्वर्णमयो मयूरो नृत्यं करिष्यति, एकां च स्वर्णमयीं पिच्छामत्र मोक्ष्यति, सा त्वया सर्वदा ग्राह्या, परं त्वयाऽन्याः पिच्छा न ग्राह्याः।" अथ स निष्पुण्यको नित्यं तथैव करोति। अथैवं कुर्वतस्तस्य कतिचिद्दिवसानन्तरमिति कुबुद्धिरुत्पन्ना यदहमत्रैकाक्येव कियद्दिनानि तिष्ठामि? इति विचार्य स दुर्भगशिरोमणिः प्रभाते नृत्यतो मयूरस्य सर्वानपि पिच्छानाकर्षयितुं लग्नः। तत्क्षणमेव स मयूरः काकरूपो जातः। देवाधिष्ठितेन तेन काकेन च स चञ्चुप्रहारतो विदारितः। पूर्वेऽपि च ये पिच्छा गृहीता आसन् तेऽपि काकपिच्छाः संजाताः। उक्तं च—"भाग्यानुसारिणी सिद्धिर्बुद्धिः कर्मानुसारिणी। दानानुसारिणी कीर्ति–र्लक्ष्मीः पुण्यानुसारिणी ॥१॥ उतावल कीजे नही, कीजे काज विनास। मोर सोनानो कागडो, करी हुओ घरदास ॥२॥

अथ स निजात्मानं निन्दयित्वा निजात्मघातं कर्तुं पर्वतोपर्यारूढः, इतस्तत्रैकं मुनिं दृष्ट्वा स तस्मै प्रोचे–"भो मुने! मम धनप्राप्त्युपायं वद।" तदा मुनिनोक्तम्–"इह भवे तव भाग्ये धनं नास्ति, यतस्त्वया यो देव आराधितस्तेन देवेनापि त्वदभाग्यवशान्मयूरात्काकः कृतः। त्वया पूर्वभवे दानं न दत्तं, नियमो न पालितः, पुनर्विनयोऽपि न कृतः, अतः कारणादेव त्वं दरिद्री जातः।" इति श्रुत्वा स जातिस्मरणं प्राप्य वैराग्याच्च दीक्षां गृहीत्वा पुण्यं च कृत्वा स्वर्गसुखभाग्जातः॥

॥ इति दरिद्रोपरि निःपुण्यककथा समाप्ता ॥

अथ चतुस्त्रिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—(अथ श्रीगौतमस्वामी पृच्छति–हे कृपासागर! हे करुणानिधे! हे भगवन्! केन कर्मणा स एव जीवो

महर्द्धिको भवति ? ३४ )

उत्तरः—( तदा श्रीवीरपरमात्मा कथयति-हे गौतम ! )

गाथा—जो पुण दायो विणयजुओ, चारित्तगुणसयाइन्नो। सो जणसयविक्खओ, महड्ढिओ होइ लोगंमि ॥ ४९ ॥

व्याख्या—यः पुरुषो [1]दानी विनयी च भवति, पुनर्यश्चारित्रगुणशतेन सहितो भवति, स पुरुषो जगन्मध्ये प्रसिद्धीभूयास्मिन् लोके महर्द्धिको भवति, पुण्यसारवत् ॥ ४९ ॥ तस्य कथामाह—

साकेतपुरे नगरे भानुनामा राजा राज्यं करोति। तत्र धनाख्यः श्रेष्ठी वर्तते। तस्य धनदत्ताभिधा भार्यास्ति। एकदा सा धनदत्ता रात्रौ स्वप्नमध्ये रत्नैर्भृतं स्वर्णकलशं पश्यति। प्रातरुत्थाय तया निजभर्तारं प्रति स वृत्तान्तो निवेदितो, यथा—"हे स्वामिन्! मयाद्य रात्रौ स्वप्ने रत्नपूर्णः स्वर्णकलशो दृष्टः, तस्य मम किं फलं भविष्यति?" तत् श्रुत्वा भर्त्रा स्वमनसि तत्स्वप्नार्थं विचार्योक्तम्—"हे प्रिये! एतत्स्वप्नानुसारेण तव भाग्यवान् पुत्रो भविष्यति।" इति श्रुत्वा सा हृष्टा जाता। क्रमेण नवभिर्मासैस्तस्याः पुत्रोऽभूत्। ततो वर्द्धापनिकापूर्वकं तस्य पुत्रस्य पुण्यसार इति नाम दत्तम्। क्रमेण स बालः पञ्चवार्षिको जातः। तदा पित्रा स पण्डितपार्श्वे पाठितः। तेन स महाविद्यावान् कलावांश्च जातः। यौवने च तेन कस्यचित् श्रेष्ठिनः कन्या परिणीता, तया समं च सुखं भुनक्ति। क्रमेण तस्य पुण्यसारस्यैको पुत्रो बभूव।

[1] अहीं चार प्रकारना दाननुं, सात प्रकारना विनयनु तथा दश प्रकारना वैयावच्चनुं वर्णन करवुं.

अथैकदा पुण्यसारो रात्रौ सुप्तोऽस्ति तस्मिन् समये लक्ष्मीदेवतयाऽऽगत्य तस्मै प्रोक्तम्—"हे पुण्यसार! प्रातरहं तव गृहे प्रवेशं करिष्यामि" इत्युक्त्वा सा लक्ष्मीरदृश्या जाता। स तु जागरूक एवासीत्। अथ प्रभाते स पुण्यसारो गृहस्य चतुःकोणेषु स्वर्णभृतांश्चतुःकलशान् पश्यति। तदा तेन विचारितम्–"ध्रुवमद्य रात्रौ मया या लक्ष्मीर्दृष्टा सा सत्यैव जाता। अथाहमिमां वार्तामद्यैव राज्ञे निवेदयिष्यामि, चेदहं तथा न करिष्यामि, तदा कोऽपि दुर्जनश्चेदिमं वृत्तान्तं राजानं कथयिष्यति तदा महानर्थो भविष्यति।" इति विचार्य पुण्यसारेण राज्ञः पार्श्वे गत्वा प्रोक्तम्–"हे स्वामिन्! मम गृहे निधानं प्रकटितमस्ति।" तत् श्रुत्वा राजा तन्निधानं द्रष्टुं तस्य गृहे समागतः, दृष्ट्वा च तन्निधानं विस्मयं प्राप्य स्वभाण्डागारे मुक्तवान्। द्वितीयदिने पुण्यसारेण पुनरपि तथैव निधानं स्वगृहे दृष्टं, कथितं च तेन राज्ञे। तदा राज्ञापि तथैव तन्निजभाण्डागारे मुक्तम्। तृतीयदिनेऽपि तथैव पुनर्जातम्। ततः पुण्यसारेण राज्ञे प्रोक्तम्–"हे महाराज! युष्माकं भाण्डागारमध्ये कियन्निधानं जातं तत्पश्यत?" तदा राज्ञा भाण्डागाराधिपतिमाकार्य कथितम्–"त्वं भाण्डागारात्तानि मुक्तानि निधानान्यत्रानय?" तदा स भाण्डागारे गत्वा तानि पश्यति, परं तत्रैकमपि तन्निधानं तेन न दृष्टम्। ततो राज्ञोऽग्रे समागत्य तेन तथैवोक्तम्। तदा राज्ञा चिन्तितम्-"मया लोभेनास्य गृहान्निधानं गृहीतं, परं मे भाग्यं विना तन्निधानं मद्भाण्डागारे न तिष्ठति। नूनमेतन्निधानं पुण्यसारस्य भाग्यमध्येऽस्ति, अतोऽहमेनं पुण्यसारं नगरश्रेष्ठिनं करिष्यामि" इति विचार्य राज्ञा पुण्यसारायैकां स्वर्णमुद्रिकां वस्त्राणि च दत्वा तं च नगरश्रेष्ठिनं विधाय वादित्रनादपुरस्सरं स तस्य गृहे प्रेषितः। एवं स पुण्यसारो निजशुभकर्मोदयात्सुखानि भुनक्ति।

अस्मिन् ( कियत् ) समये सुनन्दनामा केवली तत्र समवसृतः । तं वन्दितुं सपरिवारो राजा तत्र गतः । पुण्यसारोऽपि निजपितृसहितस्तत्र समायातः । वन्दित्वा च सर्वेऽग्रे स्थिताः, धर्मोपदेशश्रवणानन्तरं धनमित्रस्तं केवलिनं प्रति पृच्छति-" हे भगवन् ! अनेन पुण्यसारेण पूर्वभवे किं पुण्यं कृतं, येनेदृशी लक्ष्मीस्तेन लब्धा । पुना राजमानमपि तेन प्राप्तम् ।"

तदा गुरुणा प्रोक्तम्—" भो धनमित्र शृणु !

अस्मिन्नेव नगरे धनदत्तनामा कुमारोऽभूत् । तेन धनदत्तेन [1]द्वाविंशत्यभक्ष्याणां तथा [2]द्वात्रिंशदनन्तकायानां च नियमं गृहीतमासीत् । पुनस्तेन सुपात्रे दानं वितीर्णमासीत् तथैव वृद्धानां तेन विनयोऽपि च विहितोऽभूत् । इति तेन सम्यक्प्रकारेण श्राद्धधर्मः पालितोऽभूत् । कियत्कालानन्तरं स दीक्षां गृहीत्वा श्रुतं च पठित्वा प्रान्तेऽनशनं विधाय तृतीये देवलोके इन्द्रस्य सामानिकः सुरोऽभूत् । ततश्च च्युत्वायं तव पुत्रः पुण्यसारः स जातः ।

एवं निजपूर्वभवं श्रुत्वा पुण्यसारो जातिस्मरणं प्राप । ततोऽसौ निजकुटुम्बभारं स्वपुत्रे न्यस्य स्वयं च श्रीसुनन्दकेवलिनः पार्श्वे दीक्षां जग्राह । निरतिचारं चारित्रं च प्रपाल्य स देवो जातः । पश्चान्मनुष्यभवं प्राप्य स मोक्षे यास्यति । यतः
—जिण पुजे वंदे गुरु, भावे दान दीयंत । पुण्यसार जिम तेहने, ऋद्धि अचिंति हुंत ॥ १ ॥

॥ इति पुण्यसारकथा समाप्ता ॥

अथ पञ्चत्रिंशत्तमप्रश्नोत्तरमाह—

[1]–[2] अहीं २२ अभक्ष्यनुं तथा ३२ अनंतकायनुं वर्णन करवुं.

प्रश्नः—( प्रथमगणधरो श्रीगौतमस्वामी पृच्छति–हे सर्वज्ञ ! हे सर्वदर्शिन् ! हे कृपासागर ! हे भगवन् ! केन कर्मणा स एव जीवो रोगी भवति ? ३५ )

उत्तर–( तदा परमकृपालुर्भगवान् कथयति–हे गौतम ! )

गाथा—वीसत्थघायकारी सम्ममणालोइऊण पत्थिंतो । जो मरइ अन्नजम्मे, सो रोगी जायए पुरिसो ॥ ५० ॥

व्याख्या यः पुरुषो विश्वासं कृत्वा जीवं मारयति, मनसि शुद्धालोचनां च न गृह्णाति स पुरुषो मृत्वाऽन्यजन्मनि रोगी जायते । ५० ॥

प्रश्नः–( अथ श्रीगौतमस्वामी पृच्छति–हे दयासागर ! हे जनवत्सल ! हे भगवन् ! केन कर्मणा जीवो [1]रोगरहितो भवति ? अत्र रोगी नीरोगी च एकप्रश्ने समाविष्टौ )

उत्तरः–( तदा चरमतीर्थपतिः श्रीवीरप्रभुः कथयति–हे इन्द्रभूते ! हे गौतम ! )

गाथा—वीसत्थरक्खणपरो, आलोइयसव्वपावठाणो य । जो मरइ अन्नजम्मे, सो रोगविवज्जिओ होइ ॥ ५१ ॥

---

१ "भूतवत्यानुकम्पादानं सरागसंयमादियोगः क्षान्तिः शौचमिति सद्वेद्यस्य" इति तत्त्वार्थे । गुरुभक्ती क्षमा करुणा व्रतयोगकषायनिग्रह-दानरुचिदृढधर्माः इति सद्वेद्यस्य विपरीता असातावेदनीयस्याश्रवाः इति कर्मग्रन्थे ॥

व्याख्या–यः पुरुषो विश्वासिनं जीवं रक्षति पुनरात्मनः सर्वपापस्थानान्यालोचयति, अर्थात्प्रायश्चित्तं गृह्णाति, स पुरुषो मृत्वान्यजन्मनि रोगविवर्जितो भवति ॥ ५१ ॥

अत्राट्टणमल्लकथा–

उज्जयिन्यां नगर्यां जितशत्रुराजा राज्यं करोति, तस्य राज्ञ पार्श्वे एकोऽट्टणाख्यो मल्लोऽस्ति। स च बहुकला-पारीणोऽस्ति। अथ सोपारकाभिधनगरे सिंहगिरिनामा राजा राज्यं करोति। स राजा प्रतिवत्सरं महोत्सवं कारयति। तस्य राज्ञः पार्श्वेऽप्येको मल्लोऽस्ति।

अथ सोऽट्टणमल्लः प्रतिवर्षं सोपारकनगरे समागत्य तस्य राज्ञो मल्लं जयति, तथा च कृत्वा सोऽट्टणमल्लस्तस्य राज्ञः पार्श्वाद् बहुद्रव्यं समधिगच्छति। अथाऽन्यदा तेन सोपारकराज्ञा चिन्तितम्–" विदेशीयोऽयं मल्लः प्रतिवर्षं मम सभायां समागत्य मदीयं मल्लं जित्वा बहुद्रव्यं प्राप्नोति। मदीयश्च कोऽपि मल्लस्तं न जयति, एतद्वरं न, यतस्तेन मम महत्वहानिः प्रजायते "। इति विचार्य स कंचिद्बलवन्तं नरं विशोध्य तं मल्लकलां शिक्षितवान्। तस्य च मत्सीमल्ल इति नाम विहितम्।

अथ वर्षानन्तरं निर्णीतदिने यदा सोऽट्टणमल्लः सोपारके नृपसभायां समागतस्तदा तरुणो नवशिक्षितो मत्सीमल्लस्तं जितवान्। तदा हृष्टेन राज्ञा तस्मै मत्सीमल्लाय बहुद्रव्यदानं दत्तम्। पराजितश्चाट्टणमल्लः पश्चाद्वलित्वा सौराष्ट्रदेशमध्ये समागतः। इतस्तेनैको हली दृष्टः। स एकेन करेण हलं वाहयति द्वितीयेन च फल्हीमुत्पाटयति। स हली भोजनाय स्व-

स्थानके तेन सार्द्धं नीतः । तदा तस्य बहुभोजनं दृष्टं, उत्सर्गसमयेऽपि च तस्य सुदृढपुरीषं दृष्ट्वाऽट्टणमल्लेन स मल्लकलां ग्राहितः । फलहीमल्ल इति च तस्य नाम कृतम् । पश्चात्तं फलहीमल्लं सार्थे गृहीत्वा सोऽट्टणमल्लः पुनरपि सोपारकनगरे मल्लयुद्धं कर्तुं समागतः । तत्र राजसभासमक्षं फलहीमल्लेन मत्सीमल्लसार्धं बहुविधं युद्धं कृतम् । एवं तौ द्वावपि युद्धं कृत्वा तद्दिने तु निजनिजस्थाने गतौ । तदाऽट्टणमल्लेन फलहीमल्लं प्रति पृष्टम्–" हे वत्स! तव शरीरे क्व क्व गाढप्रहारा लग्नाः सन्ति तत्कथय ? यथा तान् सज्जीकरोमि " । तत् श्रुत्वा फलहीमल्लेन निजप्रहारा दर्शिताः । तदाऽट्टणमल्लेन ते सर्वेऽपि तस्य प्रहारास्तैलाभ्यंगनादिना सज्जीकृताः ।

अथ राज्ञा मत्सीमल्लायापि तथैव पृष्टं, परं तेन लज्जया स्वप्रहारा न दर्शिताः । कथितं च-' मम तु क्वापि प्रहारो न लग्नोऽस्ति । अथ द्वितीयदिने पुनरपि तयोर्मल्लयुद्धं जातं, तदा मत्सीमल्लो हारितः । फलहीमल्लस्य च बहु यशो जातं, नृपाच्च तेन बहु धनं लब्धम् । एवं सत्यकथनतः फलहीमल्लः सुखी जातः । एवं यः कश्चिद् गुरोरग्रे निजं पापं सत्येनालोचयति सोऽट्टणमल्लफलहीमल्लवच्च सुखी निरोगी च भवति । यः कश्चिल्लज्जया गुरोरग्रे सत्यं न वक्ति स मत्सीमल्लवद् दुःखी भवति । उक्तं च–"पाप आलोवे आपणां, गुरु आगल निःशंक । निरोगी सुखिया हुवे, निर्मल जिमो शशांक ॥१॥"

॥ इत्यट्टणमल्लकथालोचनोपरि ॥

अथ सप्तत्रिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—( अनेकलब्धिभण्डारः श्रीगौतमस्वामी पृच्छति–हे दयासागर! हे कृपानिधे! हे देवेन्द्रवन्द्य! स एव

जीवः कथं हीनाङ्गो भवति ? ( ३६ )

उत्तरः—( परमकृपालुर्भगवान् कथयति-हे गौतम ! )

गाथा—लहुहत्थो अइधुत्तो, कूडतुलाकूडमाणभंडेहिं । ववहरइ नियडिबहुलो, सो हीणंगो भवे पुरिसो ॥ ५२ ॥

व्याख्या—यः पुरुषो धूर्तः सन् हस्तलाघवेन कूटतोलनेन कूटमापभरणेन च तथा कुंकुमकर्पूरमंजिष्टादिभेलनेन च व्यवसायं करोति, पुनर्मायां च करोति, इति पापकरणेन स पुरुषो मृत्वा भवान्तरे हीनांगो जायते धनदत्तपुत्रवत् ॥५२॥

अत्र सा धनदत्तपुत्रकथा प्रोच्यते—

क्षितिप्रतिष्ठितनगरे ईश्वरनामा श्रेष्ठी वसति । तस्य प्रेमल्लाभिधा भार्या वर्तते । तस्य श्रेष्ठिनश्चत्वारः पुत्राः सन्ति । श्रेष्ठिना पूर्वं ते सर्वेऽपि पाठिताः, पश्चाच्च परिणायिताः । स ईश्वरो वृद्धवयस्त्वाद् गृहे एव तिष्टन् व्यवसायं करोति, परं कृपणत्वाच्च किंचिदपि दान न ददाति । एवं स किंचिदपि पुण्यं न विधत्ते ।

अथैकदा स भुक्त्वा गृहगवाक्षे स्थितोऽस्ति । अस्मिन् समये एकोऽष्टवार्षिको मुनि-रीर्यासमितिसाधकस्तस्य गृहद्वारि आहारार्थं प्राप्तः । तदा तस्य श्रेष्ठिपुत्रस्यैका लघ्वी वधूस्तं मुनिं प्रति कथयति-"चेलण[१] खरी सवार, धम्मिणि वार न जाणीये ।

१ भाषान्तरमा आ प्रमाणे दूहो छेः—चेला खरी सवार, धामणी वार न जाणीए । तुम स्यो अनथी आहार, अम्ह घर वासी जीमीए ॥ १ ॥

तम्में लीयो अनाथ विहार, अम घर वासी जीमीये ॥१॥" तत् श्रुत्वा मुनिराह—'किमहं भिक्षार्थमन्यत्र गच्छामि?' तदा वध्वा कथितम्—'यथोचितं कुरुत।' तदा मुनिरन्यत्र गतः। श्रेष्ठिनैतत्सर्वं श्रुतम्। ततः श्रेष्ठिना निजवधूमाकार्य पृष्टम्—"हे वधु! त्वया मुनये (एवं) किमुक्तं तद्वद?" अथ सा वदति—"मया सत्यमुक्तं, यथा—भो चेलण! अयं तव समयो नास्ति, अस्मिन् लघुवयसि त्वया दीक्षा कथं गृहीता?" तदा तेन साधुनोक्तम्—"हे धर्मिणि! वारं वेलां न जानामि, अयं संसारोऽसारः, ये दिवसा यान्ति ते नायान्ति, अतो मया दीक्षा गृहीता।" तदा मयोक्तम्—"अस्माकं गृहे वासिभोजनमस्ति।" तत् श्रुत्वा श्रेष्ठिनोक्तम्—"हे वधु! त्वयाऽस्माकं गृहे वासिभोजनं कथं ज्ञातं? यतोऽस्मद्गृहे तु प्रत्यहं नवीना रसवती भवति, ततस्त्वयेदं वचः कथं प्रोच्यते?" तदा वध्वा प्रोक्तम्—"मया सत्यमेवोक्तमस्ति, भवद्भिः पूर्वभवे दानं दत्तं, एतत्पुण्यमाहात्म्यतश्च भवतामेतावती ऋद्धिः प्राप्तास्ति। एवं पूर्वभवोपार्जिता लक्ष्मीस्त्वया भुज्यते। अथ च किमपि नेदिह भवे भवता दानं न दीयते तर्ह्यग्रेतनभवे किं भोक्ष्यसे?" इति वध्वा वचः श्रुत्वा स श्रेष्ठी हृष्टः सन् तां लघ्वीं वधूं प्रति सर्वगृहभारं समर्पयामास। तां च वृद्धां कृत्वा स्थापयामास।

अथ श्रेष्ठिनो दानं दातुमिच्छा जाता। ततोऽसौ सुपात्रे दानं वितरति, पुण्यं च करोति। इतस्तस्य प्रेमलाभार्यया दत्ताख्य एकः पुत्रो जातः। परं स हीनांगोऽभूत्। यौवनं प्राप्तं तं पुत्रं प्रति लोका हसन्ति। श्रेष्ठिना वैद्यानाकार्य तस्य तैलमर्दनादिबहव उपचाराः कृताः, परं तस्य गुणो न जातः।

इतस्तत्र कश्चिन्मुनिर्भिक्षार्थं समागतः। तं मुनिं वन्दित्वा श्रेष्ठी पृच्छति—"हे मुनीन्द्र! अस्य मे पुत्रस्यौषधं वद?"

तदा मुनिनोक्तम्–" जीवस्य द्विधा रोगो भवति, द्रव्यरोगो भावरोगश्च । तत्र प्रथमरोगस्य प्रतीकारं वैद्या जानन्ति, द्वितीयरोगस्य प्रतीकारं तु मम गुरवो जानन्ति । ते मम गुरवश्च वनमध्ये सन्ति । अतस्त्वं तत्र गत्वा तं प्रति रोगोपायं पृच्छ ।" तदा श्रेष्ठी तत्र गत्वा मुनिं वन्दित्वा पृच्छति–" भो गुरो ! मम दत्ताख्यः पुत्रोऽङ्गहीनो जातोऽस्ति, तस्य कारणं वद ? द्रव्यरोगो भावरोगश्च कथमुत्पद्यते ? तथैव भावरोगस्य चिकित्साकरणेन किं भावरोगोऽपि प्रयाति ?"

तत् श्रुत्वा मुनिः प्राह–" तपःसंयमकरुणाकायोत्सर्गादिकरणतो भावरोगः प्रयाति । तव पुत्रस्यायं द्रव्यरोगो जातोऽस्ति, यतस्तव पुत्रेण पूर्वभवे लोभवशतो लोकानां वञ्चनं कृतमस्ति । कूटतोलकूटमापकरणेन च तेन व्यवसायः कृतोऽस्ति । सरसवस्तूनि नीरसवस्तुभिः संमेल्य तेन विक्रीतानि सन्ति, ईदृशं तेन पापकर्म कृतमस्ति । पुनरेकवारं तेन मुनये दानं दत्तं, तेन पुण्येन स तव पुत्रो जातोऽस्ति ।" तत् श्रुत्वा स दत्तो नियमं गृहीत्वा नमस्कारध्यानपरो मृत्वा देवलोके गतः । अतो भव्यमुग्धानां वञ्चनं न विधेयम् ।

॥ इति दत्तकथा समाप्ता ॥

अथाष्टत्रिंशत्तमैकोनचत्वारिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—( श्रीगौतमस्वामी पृच्छति–हे जगन्नाथ ! हे कृपासागर ! हे परमात्मन् ! केन कर्मणा जीवो मूको भवति ? ३८ पुनः केन कर्मणा जीवो हुंटको भवति ? ३९ )

उत्तरः—( तदा कृपालुर्भगवान् कथयति—हे गौतम ! )

गाथा–संजमजुआण गुणवं–तयाण साहूण सीलकलियाणं। मूओ अवरणवाई, टुंटो पदह्णिघाएणं ॥५४॥

व्याख्या—यः पुरुषः संयमयुक्तानां पुनर्गुणवतां पुनः शीलकलितानां च साधूनामवर्णवादं वदति, स भवान्तरे मूको बोबडो भवति, पुनर्यः पुरुषः साधोः पादप्रहारं ददाति सोऽग्निशर्मावत् टुंटको भवति । अस्य कथा कथ्यते–

वडोद्रानगरे चतुर्दशविद्यानिधानो देवशर्मा ब्राह्मणो वसति । तस्याग्निशर्माभिधः पुत्रोऽस्ति । सोऽपि महाविद्यावान् वर्तते । परं स साधूनां निन्दां करोति, मनसि च गर्वं वहति । धर्मवतां गुणवतां च दोषं कथयति । पित्रा निवारितोऽपि स तां निजचेष्टां न मुञ्चति । यतः–दुग्धेन प्रक्षालितोऽपि काक उज्ज्वलत्वं न प्रयाति, तद्वत्सोऽपि निजस्वभावं न मुञ्चति ।

इतस्तस्मिन् समये कश्चिद् ज्ञानी साधुर्बहुपरिवारेण सहितस्तत्र समवसृतः । नागरिकजनास्तं वन्दितुं समागताः । एवं तस्य साधोर्महिमानं दृष्ट्वा सोऽग्निशर्मा निजहृदि अत्यन्तं क्रोधं प्राप्नोति, लोकानां पुरश्च कथयति–" एषां पाखण्डिनां सेवाकरणेन युष्माकं को लाभो भविष्यति ? नूनमयं पाखण्डी वर्तते ॥ "

अथैकदा स विप्रो लोकसमक्षं गुरुभिः सह वादं कर्तुं समागतः । तत्रागत्य च तेनोक्तम्–" भो यूयं शूद्रा अपवित्रा निर्गुणा वेदबाह्याः स्थ, अतो यूयं लोकपार्श्वात्कथं पूजां कारयथ । वयं तु ब्राह्मणा वेदपारगामिनः पवित्राः स्मः । तेषां यो दानपूजादिकं करोति स वैकुण्ठस्थाने गच्छति, किं च वर्णानां ब्राह्मणो गुरुरिति सर्वत्र लोकोक्तिरस्ति । पुनर्वयं [१]यज्ञे

१ नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, सन्तुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव । स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥ १ ॥ यूपं कृत्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ॥ २ ॥ यावन्ति रोमकूपानि, पशुगात्रेषु भारत ! तावन्ति वर्षसहस्राणि, पच्यन्ते नरकाऽवनौ ॥ ३ ॥

छागादीन् हत्वा मोक्षे मुञ्चामः । ”

तत् श्रुत्वा मुनेरेकः शिष्यो वदति–“ वयमेव ब्राह्मणाः स्मः, यूयमेव च शूद्राः स्थ। उक्तं च–‘ब्राह्मणो ब्रह्मचर्येण, यथा शिल्पेन शिल्पिकः । अन्यथा नाममात्रः स्या–दिन्द्रगोपककीटवत् ॥ १ ॥ पुनर्वयं ज्ञानादिभिस्त्रिभिः सहिताः स्मः पुनः केवलं [१]जलस्नानतः प्राणिनः शौचयुता न भवन्ति, अन्यथा जलचरा अपि सदा शौचपवित्रिता भवेयुः । मनःशुद्धिमेव शौचरूपां विद्वांसो वदन्ति, उक्तं च–‘ सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं जलशौचं च पञ्चमम् ॥ १ ॥ चित्तं रागादिभिर्दुष्टं, अलीकवचसा मुखम् । जीवहिंसादिभिः कायो, गङ्गा तस्य पराङ्मुखी ॥२॥ भागवतपुराणेऽप्युक्तम्–‘ आत्मानदी संयमतोयपूर्णा, ज्ञानं हृदि धर्मतटी दयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र ! न वारिणा शुद्ध्यति चान्तरात्मा ॥२॥ पुनस्त्वया यदुक्तम्–‘ यूयं निर्गुणास्तदप्यसंगतम् । वयं तु क्षमादयाक्रियादिगुणयुताः स्मः । उक्तं च—“ चित्तं ध्यानादिभिः शुद्धं, वदनं सत्यभाषणैः । ब्रह्मचर्यादिभिः काया, शुद्धो गंगां विनाप्यसौ ॥ १ ॥ ” पुनस्त्वयोक्तं यल्लोकपार्श्वाद्यूयं पूजां कथं कारयथ ? तदपि त्वयोक्तमसत्यमेव । लोकाः स्वयमेवास्मान् गुणिनो दृष्ट्वा पूजयन्ति। युष्मादृशां ब्राह्मणानां पूजनात् स्वर्गो न लभ्यते । यूयं केवलमपवित्राः स्थ, युष्मद्गृहे पशवोऽपत्यानि भार्याश्च वर्तन्ते, पुनर्यूयं क्रोधयुक्ता निर्दयाश्च स्थ । अतो युष्माकं पूजनात्कथं स्वर्गो भवति ? पुनस्त्वयोक्तं यद्वयं यज्ञे छागान् हत्वा मोक्षे मुञ्चामस्तदप्यसत्यम् । यतो यद्येवं भवति तदा युष्मद्भार्यापुत्रादीन् यज्ञे हत्वा कथं मोक्षे न मुञ्चथ ? उक्तं च–‘ यूपं कृत्वा पशून्

[१] संवत्सरेण यत्पापं, कैवर्तस्य च जायते । एकाहेन तदाप्नोति, अपूतजलसंग्रही ॥ १ ॥ इति भागवतपुराणे ॥

हत्वा, कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ?" इत्यादि वचनैस्तेन शिष्येण नगरलोकसमक्षं सोऽग्निशर्मा ब्राह्मणो जितः ।

अथ स ब्राह्मण ईर्ष्यायुतो निजगृहे गतः । रात्रौ चोत्थाय वनमध्ये गत्वा तत्र सुप्तान् मुनीन् प्रति स पादप्रहारं दत्तवान्, मुष्टिप्रहारं च कृतवान् । तदा वनदेवतया निवारितोऽपि स न निवृत्तः, तदा वनदेवतया तस्य चरणौ छेदितौ । प्रभाते लोकास्तं तथास्थं दृष्ट्वा तस्य निन्दां चक्रुः, यदेतस्य साधोरवहीलनाफलमीदृशं जातम् । अथ तत्पीडया स मृत्वा प्रथमनरके नारकी बभूव । ततश्च्युत्वा स दरिद्रिकुले पाखण्डनामा पुत्रो जातः । [१]पूर्वकर्मदोषाच्च स मूकश्टुण्टकश्चाभूत् । स यावदष्टवार्षिकोऽभूत्तावत्तस्य पितरौ मृतौ, तदासौ भिक्षां कृत्वा स्वोदरं बिभर्ति । एवं स भूरिसंसारं भ्रमिष्यति ।

॥ इत्यग्निशर्मकथा ॥

अथ चत्वारिंशत्तमप्रश्नोत्तरमाह—

प्रश्न—( श्रीगौतमस्वामी पृच्छति–हे कृपावतार ! हे जगन्नाथ ! हे परमात्मन् ! केन कर्मणा स एव जीवश्चरणहीनो भवति ? ४० )

उत्तर—( तदा परमदयालुर्भगवान् कथयति–हे गौतम ! )

---

१ कर्मप्रधान विश्व रचि राखा, जो जस करैसु तस फलं चाखा ॥ इति तुलसीदासकृतरामायणे ॥ अहीं ईश्वर कर्तानुं खंडन अने आ विश्व अनादि कालनुं छे तेनुं प्रमाण सहित वर्णन करवुं.

गाथा—जो वाहइ निस्संसो, छाओत्थायंपि दुक्खियं जीवं। मारेइ गत्तसंधिं, गोयम ! सो पंगुलो होइ ॥ ५४ ॥

व्याख्या—यः पुरुषो निर्दयः सन् वृषभादिजीवोपरि भारं वाहयति, पश्चात्तान् कुट्टयति, तेषामङ्गानि छिनत्ति, गात्रस्य सन्धौ च मर्मघातं ददाति स पुरुषो हे गौतम ! मृत्वा पंगुर्भवति कर्मणवत्। तस्य कथा कथ्यते—

सुग्रामनामनि ग्रामे कश्चिद्वल्लभनामा [illegible] वर्तते। स दयावान् सन्तोषी चास्ति। स नित्यं शनैः शनैर्हलं वाहयति। एवं हलं वाहयित्वा स बलीवर्दान् तस्मान्मुक्तीकृत्य पानीयपानार्थं मुञ्चति। पश्चात्तेषां तृणानि चारयति, चेच्चारं न मिलति तदा स्वस्याऽदनस्य मध्यात्तेषां भागीकृत्यादनं दत्ते। एवंविधस्तस्य सर्वदा नियमो वर्तते। तस्य हेमीनाम्नी भार्या वर्तते। सापि सरलस्वभावास्ति।

तस्याः कुक्षावुत्पन्नः कर्मणाख्यः पुत्रोऽभूत्। परं स रोगी पंगुश्चासीद् कर्मवशात्। अथ स युवा जातः सन् कृषेश्चिन्तां करोति। स प्रत्यहं वृषभोपरि समारुह्य क्षेत्रे याति, तत्र गत्वा च त्रिगुणां भूमिं कर्षयति। लोभवशान्मध्याह्नानन्तरमेव बलीवर्दान् हलान्मोचयति। परं तेषां कृते तृणपानीयादीनां चिन्तां न करोति। क्रमेण ते बलीवर्दा दुर्बला जाताः। अतस्तस्य कृषिरपि समीचीना न भवति। एवं स प्रतिवर्षं कृषिं करोति, परं प्रचुरं धान्यं तस्य न भवति, तेन स क्रमेण निर्धनो जातः, तथापि पापं तु तथैव स करोति।

इतस्तत्र कश्चिद् ज्ञानी साधुः समागतः। तं वन्दितुं सर्वे नगरलोका गताः। तौ पितापुत्रावपि गुरुं वन्दितुं गतौ।

तत्र देशनानन्तरं तं गुरुं प्रति वल्लककृषीवलः पृच्छति—“हे भगवन्! ममायं पुत्रः पंगुः शरीरे रोगी निधनश्च कथं जातः?” तदा गुरुः कथयति—“अनेन तव पुत्रेण पूर्वजन्मनि कृषिकरणे तृषार्ताः क्षुधार्ताश्च बलिवर्दा अतीव वाहिताः। तेषां सन्धिषु घाताश्च कृताः। तद्दुष्कर्मणश्च तेन पश्चात्तापोऽपि न कृतः। स ततो मृत्वायं तव पुत्रः पंगू रोगसहितश्च जातः। तत् श्रुत्वा स वल्लूककृषीवलो जातवैराग्यो निजपापानि क्षामयित्वा दीक्षां गृहीत्वा विहर्तुं लग्नः। तस्य पुत्रः कर्मणोऽपि श्राद्धधर्मं प्रतिपाल्यान्ते च स्वर्गभाग्बभूव।

॥ इति कर्मणकथा समाप्ता ॥

अथैकचत्वारिंशत्तमप्रश्नोत्तरमाह—

प्रश्नः—( अथ गौतमस्वामी पृच्छति–हे करुणासिन्धो! हे जगच्चिन्तामणे! हे भगवन्! केन कर्मणा स एव जीवः सुरूपवान् भवति? ४१ )

उत्तरः—( तदा श्रीवीरप्रभुः कथयति–हे गौतम! )

गाथा—सरलसहावो धम्मिक-माणसो जीवरक्खणपरो य। देवगुरुसंघभत्तो, गोयम! स सुरूवयो होइ ॥ ५५ ॥

व्याख्या—यः पुरुषश्छत्रदण्डवत्सरलस्वभावो भवति, पुनर्यस्य धर्मकर्मणि मनो वर्तते, पुनर्यो जीवो देवस्य संघस्य गुरोश्च भक्तिं करोति स पुरुषो हे गौतम! सुरूपवान् भवति ॥५५॥

द्वाचत्वारिंशत्तमप्रश्नः—( अथ प्रथमगणधर इन्द्रभूतिः श्रीगौतमस्वामी पृच्छति–हे कृपासागर ! हे दीनबन्धो ! हे सर्वज्ञ ! हे भगवन् ! केन कर्मणा स एव जीवः कुरूपो भवति ? ४२ )

उत्तरः—( तदा कृपालुर्भगवान् कथयति–हे गौतम ! )

गाथा—कुडिलसहावो पावप्पिओ य, जीवाणं हिंसणपरो य। देवगुरुपडिणीओ, अच्चंतकुरूवओ होइ ॥ ५६ ॥

व्याख्या—यः पुरुषः [१]कुटिलस्वभावः, पुनर्यः [२]पापप्रियो भवति, पुनर्यो जीवहिंसापरो भवति, देवगुरूपरि च द्वेषं वहति, स जीवो मृत्वाऽतीवकुरूपो भवति। अथ तद् दृष्टान्तेन दृढयति ॥५६॥

अत्र ( जगत्सुन्दराऽसुन्दरयोः ) कथा—

पाटणनगरे देवसिंहनामा धनवान् श्रेष्ठी वसति । तस्य देवश्रीनाम्नी भार्या वर्तते। सा सरला स्नेहवती चास्ति । अथैकदा रात्रौ तया सुप्तया स्वप्नमध्ये पुष्पैर्युतमेकमाम्रफलमाकाशादुत्तीर्य स्वमुखे प्रविष्टं दृष्टम् । पश्चाज्जागरितया तया स निजस्वप्नवृत्तान्तो भर्तुः समीपे कथितः । तत् श्रुत्वा भर्त्रोक्तम्–" हे प्रिये ! तव पुत्ररत्नं भविष्यति, स चाम्ररद् बहुनामा-

१ मनस्यन्यद् वचस्यन्यत् कर्मान्यत् दुरात्मनाम् । मनस्येकद् वचस्येकद् कर्मादिकन्महात्मनाम् ॥१॥ रघुकुलरीति सदा चली आई, प्राण जाय पर वचन न जाई ॥ इति रामायणे ॥

२ यदि आश्रवः स्यात् सम्पदा किं प्रयोजनम् । यदि आश्रवो न स्यात् सम्पदा किं प्रयोजनम् ॥ १ ॥

धारभूतो भविष्यति । एतत्स्वप्नफलं ज्ञात्वा साऽतीवहृष्टा संजाता । क्रमेण गर्भवती सा नवभिर्मासैर्लक्षणोपेतं पुत्ररत्नमजनयत् । दास्या श्रेष्ठिनोऽग्रे पुत्रजन्मवर्धापनिका दत्ता । जन्मतो दशदिवसानन्तरं श्रेष्ठिना मिष्टान्नैर्निजकुटुम्बं भोजयित्वा तस्य पुत्रस्य जगत्सुन्दर इति यथार्थं नाम विहितम् । क्रमेण यदा स सप्तवार्षिको बभूव तदा पित्रा लेखकशालायां कलाचार्यस्य पार्श्वे सकलाः कलाः पाठितः । एवं स १विवेकविनयसौभाग्यौदार्यधैर्यादिगुणोपेतो जातः । पश्चाच्च स यदा यौवनं प्राप्तस्तदा जिनधर्मेऽतीवरक्तोऽभूत् । स प्रत्यहं दानं ददाति, हीनदीनानां जनानां चोद्धारं करोति ।

अथ पुनरेकदा तया देवश्रियैको दवदग्धो वृक्षः स्वमुखे प्रविशन् दृष्टः स्वप्नमध्ये, अशुभस्वप्नत्वाच्च तया भर्त्रे तत्स्वप्नवृत्तान्तो न कथितः । अथ पूर्णावधौ तस्या दवदग्धवृक्षवत्कृष्णवर्ण एकः पुत्रोऽभूत् । स पुत्रश्चिपिटाक्षिको दन्तुरस्त्रिशिरा लघुकर्णबाहुस्तुच्छहृदयः स्थूलोदरो दीर्घजंघः शरीरे बहुरोमयुतो दुर्भगश्च संजातः । तं दृष्ट्वा सर्वैर्लोकैस्तस्य असुन्दर इति यथार्थनाम दत्तम् । क्रमेण सोऽसुन्दरोऽपि यौवनं प्राप्तः । परं दुर्भगत्वात्तस्मै कोऽपि कन्यां न ददाति ।

एकदा पित्रा तस्मै प्रोक्तम्—भो वत्स ! त्वया पूर्वभवे किमपि धर्मकार्यं न विहितं, तेन त्वं मनोवाञ्छितं न लभसे, अतस्त्वं धर्मं कुरु, येन धर्मेण तव शुभं भविष्यति । एवं पित्रोक्तोऽपि स मूर्खो धर्मं न करोति ।

इतस्तत्र नगरे चतुर्ज्ञानधरः सुव्रताख्यो गुरुः समागतः । तं वन्दितुं पुत्रसहितो देवसिंहो गतः । तत्र च गुरोरुपदेशं

१ वत्स ! किं चञ्चलस्वान्तो भ्रान्त्वा भ्रान्त्वा विसीदसि, यत् सन्तोषसुखं यदेन्द्रियदमो चेतस्सान्तता, यद्दीनेषु दयालुता, यदपि गीः सत्यामृतस्यन्दिनी, शौर्ये धैर्यमनार्यसंगविरतिः या संगतिः सज्जने, एते ते परिणामसुन्दरतराः सर्वे विवेकाङ्कुराः ॥ १ ॥

श्रुत्वा स तथा हृष्टो जातो यथा घनगर्जितं श्रुत्वा मयूरो हर्षं प्राप्नोति । अथ देशनानन्तरं स करौ नियोज्य गुरुं प्रति पृच्छति–"हे भगवन् ! द्वाभ्यां मम पुत्राभ्यां किं किं पुण्यं पापं च विहितमस्ति ? येन तयोर्मध्याद् वृद्धो मे पुत्रो गुणवान् सौभाग्यवान् भोगी च जातः, लघुपुत्रस्तु दुष्टो दुर्भगः [१]कृपणः पापरुचिस्तु जातोऽस्ति ।" तत् श्रुत्वा गुरुः कथयति—

अस्मिन्नेव नगरेऽस्माद्भवात्तृतीये भवे जिनदेवशिवदेवनामनी मित्रेऽभूताम् । तयोर्मध्ये जिनदेवो जैनधर्मी श्राद्धः सरलचित्तो देवगुरुभक्तियुतो जीवरक्षाकारकश्च सर्वत्र प्रसिद्धोऽभूत्, द्वितीयः शिवदेवश्च मिथ्यात्वदुष्टपरिणामी देवगुरूपरि द्वेषकृत् जीवहिंसातत्परश्चासीत् । अथ स जिनदत्तश्राद्धो मृत्वा प्रथमदेवलोके देवत्वं प्राप्तः । द्वितीयः शिवदेवोऽपि मृत्वा प्रथमनरके नारकी जातः । ततश्च्युत्वायं तवासुन्दराख्यः पुत्रो जातः । अधुनाप्यस्य बहुभवभ्रमणं भविष्यति । जगत्सुन्दरस्तत् श्रुत्वा जातिस्मरणं प्राप्य दीक्षामादाय मोक्षे गत. ।

॥ इति जगत्सुन्दराऽसुन्दरयोः कथा सम्पूर्णा ॥

अथ त्रयश्चत्वारिंशप्रश्नोत्तरमाह—

त्रयश्चत्वारिंशप्रश्नः—( अथ श्रीगौतमस्वामी पृच्छति–हे कृपानिधे ! हे जगद्बन्धो ! हे महेश ! हे भगवन् ! केन

१ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छता, शीलं शैलतटात्पतत्वभिजन. संदह्यतां वह्निना । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं, येनैकेन विना गुणास्तृणलवप्राया· समस्ता इमे ॥ १ ॥ पैसो मारो परमेश्वर, बायडी मारो गुरु । छइया छोकरा स्वामी भाई कोनी परवाह करु ॥ २ ॥ सम्नू तीरथ ससरा तीरथ आधा तीरथ साली । मा बाप को लात जो मारु, सब तीरथ घरवाली ॥३॥

कर्मणा स एव जीवो बहुवेदनार्तो भवति ? ४३ )

उत्तरः—तदा परमकरुणासागरः श्रीवीरप्रभुः कथयति–हे गौतम ! )

गाथा—जो जंतुं दंडकरखग्ग–कुंतिहिं कुणइ वेयणाओ । सो पावइ निकरुणो, परंमि बहुवेयणा पुरिसो ॥ ५७ ॥

व्याख्या—यः पुरुषो जन्तून् दण्डैः कराभ्यां खङ्गेन कुन्तेन, उपलक्षणात्पाशदण्डादिभिर्वेदनाः करोति स निष्कारुण्यः[1] पुरुषः परभवे बहुवेदनाः प्राप्नोति ॥ ५७ ॥

अथ तदुपरि मृगापुत्रकथा—

अस्मिन् जम्बूद्वीपे भरतक्षेत्रे मृगग्रामे विजयाभिधो राजा राज्यं करोति, तस्य मृगावत्यभिधाना राज्ञी वर्तते । तया समं च राजा विषयसुखानि भुनक्ति । इतः श्रीमहावीरप्रभुर्विहरंस्तत्र ग्रामे समवसृतः । तदा तस्य प्रभोः सार्थं श्रीगौतमप्रभृतयो बहव ऋषीश्वरा आसन् । तत्र देवैः समवसरणं[2] विहितं, [3]द्वादश पर्षदश्च तत्र मिलिताः । तदा श्रीमद्भगवतो महावीरस्य योजनगामिनीं वाणीं श्रुत्वा सर्वेऽपि सहर्षा जाताः । तस्मिन् समये कश्चिदेकः पुरुषो जात्यन्धः करचरणांगुलीभी

१ अहीं निर्दयतानुं वर्णन करवुं. निर्दयी मनुष्यो मानव नथी पण राक्षस छे. दीसत के नर दीसत हैं पर लक्षण तो राक्षस के सब्रही है । पीयत खावत ऊठत बैठत वो घर वो वनवास वसही हैं । सांज पडे रजनी फिर आवत, सुन्दर यो संसार वह ही हैं । औरतों लक्षण आ न मिले, बस एक पूंछ सिर सींग नही है ॥ १ ॥

२ अहीं समवसरणनुं वर्णन करवुं. ३ बार प्रकारनी पर्षदानुं स्वरूप कहेवुं.

रहितो दुर्भगश्च केनापि प्रकारेण तत्र समवसरणे समागतः । लोकास्तं दृष्ट्वा निन्दन्ति ।

तं दृष्ट्वा श्रीगौतमो वीरप्रभुं प्रति पृच्छति–" हे भगवन् ! अनेन पुरुषेण पूर्वभवे बहुविधानि पापानि कृतानि भवेयुः, येनायमीदृशः कुष्ठरोगी जातोऽस्ति, लोकाश्च तं दृष्ट्वा कुत्सां कुर्वन्ति ।" तत् श्रुत्वा श्रीवीरः कथयति–" हे गौतम ! त्वमतोऽप्यधिकमाश्चर्यं शृणु—

अस्मिन्नेव ग्रामे एको राजपुत्रोऽस्ति । सोऽतीवदुःखी बधिरः पुनर्नपुंसकश्चास्ति । तथैव तस्य द्वौ हस्तौ पादौ चापि न सन्ति । तस्य शरीरेऽष्टौ नाडिका मध्ये वहन्ति । अष्ट च नाड्यः शरीराद् बहिर्वहन्ति । पुनस्तस्याष्टभ्यो नाडीभ्यो रक्तादि वहन्ति । तस्य शरीरान्महादुर्गन्धः प्रादुर्भवति । एवं स इहैव नरकस्य दु खान्यनुभवन्ति ।

तत् श्रुत्वा गौतमस्य हृदि तं द्रष्टुं कौतुकमुत्पन्नम् । तदा भगवता तस्मै प्रोक्तम्–" हे गौतम ! चेत्तव मनसि कौतुकमस्ति, तर्हि त्वं तत्र याहि ? तं च पश्य ?" एवं श्रीवीरस्यादेशाद्गौतमो राज्ञो गृहे गतः । गौतममागतं दृष्ट्वा नृपराज्ञ्यौ हृष्टे । ताभ्यां कथितम्–" हे भगवन्नत्र युष्माकमत्रागमनेनास्माकं महद्भाग्यं प्रकटीभूतम् ।" अथ गौतमः प्राह–" हे राजन् ! अहमत्र तव पुत्रदर्शनार्थमागतोऽस्मि ।" तदा भूमिगृहस्थितोऽसौ पुत्रस्तया दर्शितः । गौतमस्तं तथास्थं दृष्ट्वाऽतीव निर्विण्णः सन् श्रीवीरसमीपे समागतः । प्रभुं प्रति च पृष्टवान्–" हे भगवन् ! अनेन मृगापुत्रेणैवंविधं किं पापं कृतमस्ति? येनायमेवंविधं दुःखभाग्जातोऽस्ति ।" तदा प्रभुः कथयति–" भो गौतम ! अस्य सम्बन्धं शृणु—

शतद्वारनगरे नरपतिराजा वर्तते । तस्यैको विजयवर्द्धननामा मन्त्री विद्यते । स पञ्चशतग्रामाणामधिकारी राज्ञा कृतः ।

स महारौद्रपरिणामो क्षुद्रबुद्धिः पापकर्मा बभूव। लोकेभ्योऽसावधिककरान् गृह्णाति, नवनवकरांश्च स्थापयति। पुनरसौ लोकानामुपरि कूटकलंकान् ददाति। एवं तेन सर्वलोका निर्धनाः कृताः। ईदृग्बहुविधपापकरणतस्तस्य तस्मिन्नेव भवे कास-श्वासज्वरादयः षोडश रोगाः समुद्भूताः। पश्चादार्त्तध्यानान्मृत्वा स प्रथमे नरके गतः। ततश्च्युत्वायं विजयराज्ञः पुत्रोऽभूत्। नपुंसको दुःखी च संजातः। अतोऽकृत्यं नैव कर्तव्यम्।

॥ इति मृगापुत्रकथा ॥

अथ चतुश्चत्वारिंशत्तमप्रश्नोत्तरमाह—

चतुश्चत्वारिंशप्रश्नः—( अथ प्रथमगणधरः श्रीगौतमस्वामी पृच्छति–हे कृपासागर! हे देवेन्द्रवन्द्य! हे विभो! केन कर्मणा स एव जीवो वेदनाविमुक्तो भवति ? ४४ )

उत्तरः–( तदा कृपालुर्भगवान् कथयति–हे गौतम! )

गाथा—जो सत्तो वियाणत्तो, मोआवेइ बंधणाउ मरणाउ। कारुण्णपुण्णहियओ, नो असुहा वेयणा तस्स ॥ ५८ ॥

व्याख्या—यः पुरुषोऽन्यैः कैश्चिन्निगडितान् शृंखलाबन्धनैर्बद्धान् जीवान् बन्धनान्मरणाद्वा मोचयति, पुनर्यो दयालुर्भवति, तस्य जीवस्य कदाप्यशुभा वेदना न भवति, चन्दनश्रेष्ठिपुत्रजिनदत्तवत् ॥ ५८ ॥

अत्र जिनदत्तकथा—

सुप्रतिष्ठितनगरे चन्दननामा श्रेष्ठी वर्तते । परं स भद्रकपरिणामोऽपि मिथ्यात्वी वर्तते । तस्य वाहिनी नाम्नी भार्यास्ति । अथैकदा तस्य चन्दनस्य गृहे कोऽपि जितेन्द्रियः साधुः समागतः । तेन श्रेष्ठिना तस्मै साधवे प्रासुकमुपाश्रयं दत्वा स तत्र चतुर्मासकं स्थापितः । ततोऽसौ चन्दनस्तस्य पार्श्वे धर्मं शृणोति । धर्मं च श्रुत्वा तेन जीवहिंसानियमो गृहीतो भार्यया सह । अतः कारणात्तस्य गोत्रदेव्यपि सम्यग्दृष्टिर्बभूव । चातुर्मासानन्तरं साधुर्विहारं कृत्वाऽन्यत्र गतः ।

अथ स श्रेष्ठी सम्यक्प्रथमव्रतं पालयति । परं तस्य पुत्रो नास्ति । तेन स चिन्तातुरस्तिष्ठति । अतोऽसौ देवदेवीगोत्रजादीन् पुत्रार्थमाराधयति । कुंकुमकर्पूरचन्दनपुष्पधूपदीपैश्च तान् पूजयति । पुनरसौ भूमिशयनं विधत्ते । तपस्तपति । अथ क्रमेण देवता तस्मै प्रसन्नाभूत् । देव्योक्तम्—" भो चन्दन ! तवोपर्यहं तुष्टास्मि । ततस्तव मनसि यस्येच्छा भवेत्तन्मार्गय ?" तदा चन्दनेनोक्तम्—" हे मातर्मम पुत्रो नास्ति, अतस्त्वं पुत्रं देहि ?" तदा देव्या चिन्तितम्—" प्रथममहं तस्य धर्मपरीक्षां कृत्वा पश्चात्तस्य पुत्रं यच्छामि " इति विचार्य देव्या तस्मै प्रोक्तम्—" हे श्रेष्ठिन् ! यदि तव पुत्रस्येच्छा भवेत्तर्हि त्वं मे एकं जीवं हत्वा बलिं देहि ? यदि तं बलिं चेन्मह्यं न दास्यसि, तदाहं त्वां तव स्त्रियं चापि हनिष्ये ।" तदा श्रेष्ठिनोक्तम्—" मा देवि ! त्वमेवं कथं जल्पसि ? मया प्रथममेव प्राणातिपातव्रतस्य ग्रहणं कृतमस्ति, अतस्तन्नियमस्य कथमहं भङ्गं करोमि ? जीवहिंसया प्राप्यमाणस्य पुत्रस्यापि मे प्रयोजनं नास्ति । गृहीतं व्रतं कदाप्यहं न त्यजामि "। इत्येतस्य वचः श्रुत्वा कुपितेव देवी खड्गमुत्पाट्य तस्य भार्याया मस्तकं छेत्तुं लग्ना, तदा पूत्कुर्वंती सा निजभर्तारं प्रति वक्ति—" हे स्वामिन् ! त्वं कदाग्रहं मुञ्च ? एतस्यै देव्यै च बलिं देहि ? चेत्त्वं तस्यै बलिं न दास्यसि, तदा सा त्वामपि हनिष्यति ।" एवं स्त्रिया

प्रेरितोऽपि श्रेष्ठी न क्षुब्धः, तदा देवी हृष्टा जाता, कथयामास च–"भो श्रेष्ठिन्! नूनं त्वं धन्योऽसि, कृतपुण्योऽसि, मयैवं तव परीक्षा कृता। धर्मे दृढचित्तत्वात्तव योग्यः पुत्रो भविष्यति। त्वयापि तस्य पुत्रस्याभिधानं जिनदत्त इति विधेयम्।" इत्युक्त्वा सा देव्यदृश्या जाता।

अथ कतिचिद्दिवसानन्तरं तस्य मनोहरः पुत्रो जातः। चन्दनश्रेष्टिना च महोत्सवपूर्वकं तस्य जिनदत्त इत्यभिधानं कृतम्। पञ्चवर्षाणि यावत्तं लालयित्वा पित्रा स पाठितः। एवं तेन पुत्रेण सर्वा अपि विद्याः कलाश्च शिक्षिताः। क्रमेण स यौवनं प्राप्तः। तदा पित्रा कुलीना योग्या च कन्या तस्मै परिणायिता। एवं स जिनदत्तः पितुर्वल्लभो नीरोगी च संजातः। स जिनदत्तो नित्यं देवान् पूजयति।

इतो वनारामे कश्चिद् ज्ञानी गुरुः समागतः। तदा पुत्रसहितश्चन्दनस्तं वन्दितुं गतः। तत्र धर्मोपदेशश्रवणानन्तरं चन्दनश्रेष्टी गुरुं पृच्छति—"हे भगवन्! ममायं जिनदत्ताख्यः पुत्रो नीरोगी सुखी च केन कर्मणा जातः?" तदा गुरुर्वदति–"त्वं सावधानतया शृणु—

अस्मिन्नेव नगरे धरणनामा वणिगभूत्। तस्य च साधारणाख्यः पुत्रोऽभूत्। स पापं विना वाणिज्यं करोति। पुनः पाशबद्धान् मृगवकतित्तिरप्रमुखान् जीवान्मोचयति, तथैव देवगुरुसंघानां भक्तिं करोति। [1]श्रीशत्रुञ्जयप्रमुखतीर्थानां यात्रां

१ आरम्भाणा निवृत्तिर्द्रविणसफलता संघवात्सल्यमुच्चैर्नैर्मल्यं दर्शनस्य प्रणयिजनहितं जीर्णचैत्यादिकृत्यम्। तीर्थौन्नत्यप्रभावं जिनवचनकृतिः तीर्थकृत्कर्मकृत्यम्, सिद्धेरासन्नभावः सुरनरपदवी तीर्थयात्राफलानि ॥ १ ॥ अहीं शत्रुंजय वगेरे तीर्थोनी यात्रा संबन्धी वर्णन करवुं ॥

करोति । पश्चात्स्वायुःक्षये स देवलोके देवोऽभूत् । ततश्च्युत्वाऽयं तव पुत्रो जिनदत्ताख्यो बभूव । स पूर्वभवपुण्यकरणात्सुखी नीरोगी च जातः ।"

इत्येवं श्रवणानन्तरं पितापुत्रयोर्जातिस्मरणं समुत्पन्नम् । तेन ताभ्यां वैराग्यतो दीक्षां ग्रहीतुं गुरवो विज्ञप्ताः । तदा गुरुभिरुक्तम्-" युवयोरद्यापि बहु भोग्यकर्म विद्यते, अतो युवां श्राद्धधर्मं स्वीकुरुतम् । " अथ तौ श्राद्धधर्मं प्रतिपद्य स्वगृहे समाजग्मतुः । अनेकदानपुण्यकार्याणि च कर्तुं लग्नौ । प्रान्ते तौ महाव्रतानि गृहीत्वा देवावभूताम् । ततश्च्युत्वा मानुष्यभवं प्राप्य मोक्षे गतौ ॥

॥ इति जिनदत्तकथा समाप्ता ॥

अथ पञ्चचत्वारिंशत्तमप्रश्नोत्तरमाह—

पञ्चचत्वारिंशप्रश्नः—( अनेकलब्धिभण्डारः श्रीगौतमस्वामी पृच्छति–हे दीनबन्धो ! हे करुणासागर ! हे कृपासागर ! हे प्रभो ! केन कर्मणा पञ्चेन्द्रियोऽपि जीव एकेन्द्रियो भवति ? ४५ )

उत्तर—( तदा दयावान् श्रीवीरप्रभुः कथयति–हे गौतम ! )

गाथा—जया मोहोदओ तिव्वो, अन्नाणं खु महाभयं । कोमलं वेयणिज्जं तु, ( पेलवं वेयणिज्जं च, ) तथा एगिंदियत्तणं ॥ ५९ ॥

व्याख्या—यदा जीवस्य [१]मोहनीयकर्मणस्तीव्रोदयो भवति, पुनरसौ ज्ञानं न जानाति, महाभयाकुलश्च भवति,

१ " केवलिश्रुतधर्मसंघदेवावर्णवादो दर्शनमोहस्य, कषायोदया तीव्रात्मपरिणामश्चारित्रमोहस्य आश्रवाः " इति तत्त्वार्थे ।

पुनर्यस्य सातवेदनीयं कर्म स्तोकतरं भवति, कुटुम्बस्य च यो मूर्च्छां करोति, स जीवो मृत्वैकेन्द्रियेषूत्पद्यते, बहुकालं च संसारे भ्रमति, मोहनवत् ॥ ५९ ॥ तस्य कथा प्रोच्यते—

महीसारनगरे मोहनदासाख्यो वणिग्वसति, तस्य मोहनदासीति नाम्नी भार्या वर्तते। स मोहनदासो [1]महाकृपणः सन् पित्रोपार्जितं लक्ष्मीं भुनक्ति, दिवसे केवलमेकवारमेव रूक्षमाहारमत्ति, पुनरसौ चौरभीत्या निजधनं भूमौ क्षिप्त्वा रक्षति, स्वयं च रात्रौ तस्य रक्षां करोति, परं रात्रौ सुखं न शेते। नित्यमधौतानि स्थूलानि मलिनानि च वस्त्राणि स धारयति। कदापि दानं न ददाति। लोभवशाच्च स गुणवतः स्वजनानपि नोपलक्षयति। चेत्कश्चिद्याचकः सन्मुखं मिलति तदा स निजमुखं वक्रीकृत्य प्रयाति, परं तस्य याचकस्य सन्मुखमपि न विलोकयति। उक्तं च–" किसुं करेरे कृपण वखाण, नवि ओलखे आव्या घरजाण। ए तलमां नहि तेल लगार, जे एहने वांछे ते गमार ॥ १ ॥ "

अथ क्रमेण तस्यैकः पुत्रो बभूव। तस्य च लक्ष्मण इति नाम प्रतिष्ठितम्। मोहवशेन च स तं निजपुत्रं हस्तादपि न मुञ्चति। अथ बाल्यकाले गते सति स पुत्रो विवेकी बुद्धिमान् चतुरश्च संजातः। एवं स निजपितुर्गुणाद्विपरीतोऽभूत्। स लक्ष्मणः सदा सप्तक्षेत्रेषु धनव्ययं कर्तुं लग्नः। तदा तस्य पित्रोक्तम्–" हे वत्स! मया बहुदुःखेनैव धनमुपार्जितमस्ति, तद्धनं त्वं कथं निरर्थकं व्ययसि?" तदा पुत्रेणोक्तम्–" हे तात! दानं ददतां जनानां धनं न कदापि क्षयति। उक्तं च– 'देहि दानं सुपात्रेभ्यो, ददन्न क्षीयते धनम्। कूपारामगवादीनां, ददतामेव संपदः ॥१॥' यथा कूपस्य नीरं, आरामात्फ-

[1] दाता दाता मरी गये, रह गये मक्खीचूस। लैने दैने को कुछ नही, स्ालो ठोके दूस ॥

लानि, गोमहिषीभ्यो दुग्धं यथा यथा प्रत्यहं गृह्यते तथा तथा तत्सर्वं वृद्धिं प्रयाति, एवं सुपात्रेभ्यो दत्तं धनं नित्यं वर्धते एव। उक्तं च-वसुधाभरणं पुरुषः, पुरुषाभरणं प्रधानतरलक्ष्मीः। लक्ष्म्याभरणं दानं, दानाभरणं सुपात्रं च ॥१॥' अतो दानादेव लक्ष्मीर्वर्धते।"

एवं पुत्रेणोक्तोऽपि तत्पिता लोभं न त्यजति। अथैकदा चौरैः क्षात्रं दत्वा तस्य धनं निष्कास्य गृहीतं, तद् ज्ञात्वा स मोहनदास उच्चैस्तरं रुदनं कर्तुं लग्नः। स भोजनमपि न करोति। तदा पुत्रेणागत्य तस्मै प्रोक्तम्-"भो तात! त्वं मा रोदीः? इयं लक्ष्मीश्चपलास्ति, अतस्त्वं भुंक्ष्व?" एवं पुत्रेण कथिते सति स भोजनं करोति। अथ द्वितीयवर्षे तस्य भार्या मृता, तदा तन्मोहात् स मोहनदासोऽपि तद्गुणान् स्मृत्वा स्मृत्वा तद्दुःखान्मृतः।

अथ तस्य पुत्रो लक्ष्मणः पितुर्मृतकार्यं कृत्वा संसारस्यासारतां च विज्ञाय शोकं न करोति। पुनरसौ मनसि चिन्तयति-"नूनमयं मोहो दुर्जयोऽस्ति। मत्पितापि मोहादेव मृतः। अयं मोहो जीवस्य सन्निपातरूप एव, यस्तिमिरं विनापि जीवानां चक्षुरावृणोति, अतो मोहस्य विलयेनैव जीवस्य सुखं भवति।" यावत्स एवं मनसि विचारयति तावत्तत्र कश्चित् श्रुतकेवली गुरुः समागतः। तदासौ लक्ष्मणस्तत्र गत्वा गुरुं च नत्वा धर्मोपदेशं श्रुत्वा गुरुं पृच्छति—"हे भगवन्! मम पितुः का गतिर्जाता?" तदा गुरुणोक्तम्-"तव पिता धनकुटुम्बमोहान्मृत्वा एकेन्द्रियपृथ्वीकाये समुत्पन्नोऽस्ति, पश्चाच्च सोऽप्कायाग्निवायुवनस्पतिकायेषु समुत्पत्य बहुसंसारं भ्रमिष्यति।" एवं गुरुमुखात् श्रुत्वा स वैराग्याद्दीक्षां गृहीत्वा सम्यग्नमस्कारेण धर्ममाराध्य कर्मक्षयं कृत्वा मोक्षे गतः। अतो भव्यजनैर्मोहो न कर्तव्यः।

॥ इति मोहविषये मोहनलक्ष्मणयोः कथा सम्पूर्णा ॥

अथ षट्चत्वारिंशत्तमप्रश्नोत्तरमाह—

षट्चत्वारिंशप्रश्नः—( अथ श्रीगौतमस्वामी पृच्छति—हे कृपानिधे ! हे करुणासागर ! हे जगद्वत्सल ! प्रभो ! कथं संसारः स्थिरीभवति ? ४६ )

उत्तर—( तदा परमकृपालुर्भगवान् कथयति—हे गौतम ! )

गाथा—न य धम्मो न य जीवो, नो परलोगुत्ति न य कोइ । रिसिवि नो मन्नइ मूढो, तस्स थिरो होइ संसारो ॥ ६० ॥

व्याख्या—यो नास्तिकवादी जीव एवं मन्यते चैवं कथयति यद्धर्मो नास्ति, पुनर्जीवोऽपि नास्ति, तथैव ऋषिरपि नास्ति, ईदृशस्य नास्तिकवादिनः पुरुषस्य बहुलतरः संसारो भवति, स मोक्षं न प्राप्नोतीति भावः ॥६०॥

( अथ सप्तचत्वारिंशत्तमप्रश्नोत्तरमाह— )

सप्तचत्वारिंशप्रश्नः—( प्रथम गणधरः श्रीगौतमस्वामी पृच्छति–हे परमकृपालो ! हे कृपासिन्धो ! हे दीनदयाल ! प्रभो ! केन कर्मणा संसारो संक्षिप्तो भवति ? ४७ )

उत्तरः—( अथ चरमतीर्थपतिः श्रीमहावीरप्रभुः कथयति—हे गौतम ! )

गाथा–धम्मोवि अत्थि लोए, अत्थि अहम्मोवि अत्थि सव्वन्नू । रिसिणोवि अत्थि लोए, जो मन्नइ सोप्पसंसारी ॥ ६१ ॥

व्याख्या—जगन्मध्ये धर्मोऽप्यस्ति, अधर्मोऽप्यस्ति, सर्वज्ञोऽप्यस्ति, तथा ऋषिरप्यस्ति, एवं यः पुरुषो मन्यते, स जीवोऽल्पसंसारी भवति, अर्थात् स जीवः शीघ्रं मोक्षे गच्छतीति, सुरवीरशिष्यौवत् ॥ ६० ॥

अथ तयोः सम्बन्धमाह—

राजगृहे नगरे एकस्य पण्डितस्य पार्श्वे सूरवीरनामानौ द्वौ शिष्यौ पठतः । तयोर्मध्यादेकः सुराख्यः शिष्यो नास्तिकसंगान्नास्तिकवादी मूर्खो धर्ममार्गस्योत्थापकः कदाग्रही च जातः, पुनः स्वयं विचक्षणत्वादन्यान् सर्वानपि लोकांस्तृणसमान् गणयति । मुखार्थी लोकश्च तस्य वचो मन्यते । यतः—"हंसा रज्जंति सरे, भमरा रज्जंति केतकीकुसुमे । चन्दनवने भुजङ्गा, सरिसा सरिसेहिं रज्जंति ॥ १ ॥"

अथ द्वितीयो वीराख्यस्तु साधुसंगत्या धर्मज्ञो जिनधर्मस्थापकश्च विद्यते । अस्मिन् समये कश्चिच्चतुर्ज्ञानी साधुस्तत्र समागतः । तं वन्दितुं स वीरः सर्वलोकसहितस्तत्र गतः । स नास्तिकवादी सूरोऽपि साहंकारित्वाद् गुरोर्महिमानं विज्ञायेर्ष्यया तत्रागतः । आगत्य चासौ साहंकारं वच उक्तवान्—"भो साधो ! भवद्भिर्लोकाः कथं प्रतार्यन्ते ? युष्माकं चेच्छक्तिरस्ति तदास्माभिः सह चतुरंग विवादं कुरुध्वम् ? उत्तरं च दत्वाऽस्माकमहंकारं दूरीकारयध्वम् ?"

तदैकेन शिष्येणोक्तम्—"भो सूर ! मम गुरुः सर्वज्ञोऽस्ति, त्वं तत्र पक्षं स्थापय ? अहमेव त्वां निरुत्तरीकरिष्यामि ।" तत् श्रुत्वा सूरेणोक्तम्—"[1]इह धर्मो नास्ति, परलोकोऽपि नास्ति, आत्मापि नास्ति, पञ्चभूतैरेव निर्मिते शरीरे चैतन्यशक्तिरुत्पद्यते, यथा मधुकपिष्टादियोगान्मद्यशक्तिः । किं च प्राणिनां सुखदुःखस्य कारणमपि

१ अहीं केशी गणधर अने प्रदेशी राजाना संवादनुं वर्णन करवु.

कर्म नास्ति। यत एकस्य दृषद उपरि विष्ठा क्रियते, द्वितीयश्चेदृगेव दृषत्पुष्पादिभिः पूज्यते, अतो जपतपोऽनुष्ठानादि सर्वमपि निष्फलमेव" इत्युक्त्वा स सूरः स्थिरीभूतः। तदा स शिष्यो वदति—"हे सूर! आत्माऽस्त्येव स्वसंवेद्यत्वात्, चेदात्मा न भवेत्तर्हि अहं सुखी, अहं दुःखी इत्यादि सुखदुःखं को जानाति? पुनस्त्वयोक्तं यत्पञ्चभूतेभ्यश्चैतन्यशक्तिः प्रजायते, तदपि तव वचनमसत्यमेव, यतस्ते पञ्चापि भूता अचेतनाः सन्ति, ततोऽचेतनेभ्यः पदार्थेभ्यश्चैतन्यशक्तिः कथं प्रजायते? अत आत्मा अस्त्येव। पुनरेको दुःखी, एकश्च सुखी, एको दासः, एकश्च स्वामी, तत्सर्वं पूर्वकृतकर्मानुसारेणैव जायते, अतः कर्माप्यस्त्येव। ततोऽशुभकर्मणां क्षयकृते तपःसंयमादिक्रिया युज्यते एव। पुनर्धर्माधर्मस्य फलमिह परलोकेऽपि च ज्ञायते, अतो धर्मो विद्यत एव। तस्मात्कारणात्त्वं कदाग्रहं मुञ्च?" एवमुक्तेनापि सूरेण यदा निज कदाग्रहो न मुक्तस्तदा राजा तं सूरं निजनगरान्निष्कासयामास। एवं स सूरो बहुसंसारं भ्रमिष्यति।

अथ स द्वितीयो वीरश्राद्ध आयुःक्षये मृत्वा देवलोके समुत्पन्नः, पश्चान्मनुष्यभवं प्राप्य स च मोक्षे यास्यति।

॥ इति सूरवीरयोः कथा ॥

अथाष्टाचत्वारिंशत्तमप्रश्नोत्तरमाह—

अष्टाचत्वारिंशप्रश्नः—( श्रीगौतमस्वामी पृच्छति–हे कृपावतार! हे जगत्त्रयाधार! हे करुणासागर! केन कारणेन जीवः संसारसागरं तरित्वा सिद्धिपुरीं प्राप्नोति? ४८ )

उत्तरः—( परमकारुणिकः श्रीवीरप्रभुः कथयति—हे गौतम! )

गाथा—जो निम्मलनाणचरित्त-दंसणेहिं विभूसियसरीरो। सो संसारं तिरिउं सिद्धिपुरं पावए पुरिसो ॥ ६२ ॥

व्याख्या—यः पुरुषो निर्मलज्ञानदर्शनचारित्रैः संयुक्तो भवति स संसारसमुद्रं तरित्वा स्तोककालेन मोक्षं गच्छति, अभयकुमारवत् ॥ ६२ ॥

अथ तस्याभयकुमारस्य सम्बन्धमाह—

मगधदेशे राजगृहनगर्यां श्रेणिकनामा राजा राज्यं करोति, तस्य राज्ञो वृद्धः पुत्रश्चतुर्बुद्धिनिधानः श्रीअभयकुमाराभिधोऽस्ति। श्रेणिकनृपोऽभयकुमारं राज्ययोग्यं ज्ञात्वा तस्मै स्वराज्यं समर्पयितुं वाञ्छति, परं स पापभीत्या राज्यं न गृह्णाति। अथ तस्मिन्नवसरे राजगृहनगरे गुणशीलाभिधे चैत्ये श्रीमहावीरः समवसृतः। तं वन्दितुमभयकुमारस्तत्र गतः। तत्रोपविश्य धर्मोपदेशं च श्रुत्वाभयकुमारः श्रीवीरप्रभुं प्रति पृच्छति—हे भगवन्नन्तिमो राजर्षिः कः भविष्यति? श्रीवीर आह—" हे अभयकुमार! अन्तिमराजर्षिरुदायिनामा राजा भविष्यति। एवं श्रीवीरमुखात् श्रुत्वा उदायिराज्ञा दीक्षा गृहीता। तदा श्रीवीरेणोक्तमथेदृशः कोऽपि राजा दीक्षां न गृहिष्यति।

तदाऽभयकुमार [1]स्वपरिणामिकया बुद्ध्या चिन्तयति—" अथाहं पितुराग्रहेणापि राज्यं न लास्यामि, यतो राज्यग्रहणानन्तरं मे दीक्षा न भविष्यति "। इति चिन्तयन् स गृहे समागतः। राज्ञापि तस्य दीक्षामनोरथो ज्ञातः।

[1] अहीं बुद्धिना चार भेदोनुं वर्णन करवुं.

अथैकदा राज्ञाऽभयकुमारायोक्तम्–" अद्याहं चेल्लणाराज्ञ्या सह श्रीवीरं वन्दितुं गच्छामि । त्वया तत्रैव स्थेयम् । अस्माकमाज्ञां विना त्वया वीरसमीपे नैव गन्तव्यम् ।" अभयकुमारेणापि तद्वचोऽङ्गीकृतम् । अथ राजा चेल्लणया सहितः श्रीवीरं वन्दित्वा धर्मं च श्रुत्वा सन्ध्याकाले पश्चाद्वलितः । अथ तस्मिन् शीतकाले मार्गे समागच्छन्त्या चेल्लणाराज्ञ्यैकस्य सरस्तीरे एको निर्वस्त्रः साधुः कायोत्सर्गध्यानस्थो दृष्टः । तं दृष्ट्वा राज्ञ्या चिन्तितम्–" अहो धन्योऽयं मुनिर्य एवं दुःकरं परीषहं सहते । "

अथ क्रमेण राज्ञी नृपेण सह गृहे समागत्य शय्यायां सुप्ता । निद्रावशतश्चेल्लणाया एको हस्तोऽनाच्छादितो बभूव । अतीव शीतेन च तस्याः स हस्तोऽप्यतीव शीतलीभूतः । कियत्कालानन्तरं सा राज्ञी जागृता सती तं निजहस्तं वस्त्रेणाच्छादयामास । तस्मिन् समये सा चेल्लणा राज्ञी मनसि तं कायोत्सर्गस्थं मुनिं स्मृत्वा स्मृत्वा स्वमुखेनोच्चैः स्वरेण जगाद–" अहो अस्मिन् शीतकाले स निर्वस्त्रः किं करिष्यति ? " अथ तस्या ईदृशः शब्दः श्रेणिकराज्ञा श्रुतः । तदा तेन हृदि चिन्तितम्–'नूनमियं मम पट्टराज्ञी असती ज्ञायते, अस्या हृदयेऽधुना कोऽप्यन्यः पुरुषो वसति, यमियं पुनः पुनः स्मरति ।'

अथ प्रभातेऽभयकुमारो यदा राजानं नमस्कर्तुं समागतस्तदा राज्ञा तं प्रतीत्यादिष्टम्—" भो अभयकुमार ! एतत्सर्वमन्तःपुरं त्वया ज्वालनीयम् " इति कथयित्वा राजा स्वयं तद्विषये श्रीवीरं प्रष्टुं गतः । तत्र गत्वा प्रभुं वन्दित्वा स

१ अहीं जिनकल्पी अने स्थविरकल्पीनुं विस्तारथी वर्णन करवुं.

पृच्छति—" हे भगवन् ! सा मम राज्ञी चेल्लणा सत्यस्ति वाऽसत्यस्ति ? " तदा भगवतोक्तम्—" हे राजन् ! चेटक-राज्ञः सप्तापि पुत्र्यः सत्यः सन्ति।" इति श्रुत्वा राजा पुनः पृच्छति—" हे भगवन् ! तर्हि अद्य रात्रौ चेल्लणया राज्ञ्यैवं कथं जल्पितम् ? " तदा भगवता सर्वमपि तद्वृत्तान्तं कथयित्वा तस्य सन्देहो दूरीकृतः। तदा राजा शीघ्रमेव ततः पश्चाद्वलितः।

अथात्राभयकुमारेण निजबुद्ध्यान्तःपुरसमीपस्थमेकं जीर्णं गृहं प्रज्वालितम्। ततः स्वयं च राज्ञः सन्मुखं समायातः। तदा राज्ञा पृष्टम्—" हे अभयकुमार ! त्वया सर्वमन्तःपुरं प्रज्वालितं वा किम् ? " तदाऽभयकुमारेणोक्तम्—" मया सर्वं कार्यं कृतं, अधुनास्ति ममाज्ञा ? गच्छाम्यहं श्रीवीरप्रभुसमीपे।" राज्ञापि संभ्रमवशात्तस्मै आज्ञा दत्ता। शीघ्रमेव श्रीअभयकुमारोऽपि श्रीवीरप्रभुसमीपे गत्वा दीक्षां जग्राह।

अथ गृहागतो राजा सर्वमप्यन्तःपुरं समाधियुक्तं दृष्ट्वा हृष्टः। पश्चात्स शीघ्रमेव श्रीवीरप्रभोः समवसरणे समागत्याभयकुमारं प्रति कथयामास " हे पुत्र ! त्वं पुनर्गृहे समागच्छ।" तदाभयकुमारेणोक्तम्—" हे तात ! मया भवदाज्ञयैव दीक्षा गृहीताऽस्ति "। ततः श्रेणिकराजा प्रभुं चाभयकुमारादीन् साधून्नत्वा स्वापराधं च क्षामयित्वा गृहे समागतः। अथाभयकुमारः शुद्धमनसा ज्ञानदर्शनचारित्रात्मकं रत्नत्रयं सम्यगाराध्य स्वायुःक्षये सर्वार्थसिद्धौ जगाम। एकावतारानन्तरं च स मोक्षे यास्यति।

॥ इत्यभयकुमारकथा सम्पूर्णा ॥

अथ शास्त्रफलं कथयति—

गाथा—जं गोयमेण पुट्ठं, तं कहियं जिणवरेण वीरेण । भव्वा भावे य सया, धम्माधम्मफलं पयडं ॥६२॥

व्याख्या—यद् गौतमेन पृष्टं तत् श्रीवीरेण जिनवरेण कथितं, अतो हे भव्यलोकाः ! एतद्धर्माधर्मफलं युष्माभिः प्रकटं यथा स्यात्तथा भावितव्यम् ॥ ६३ ॥

गाथा—अडयालीसा पुच्छो-त्तरेण गाहाण होइ चउसट्ठो । संखेवेणं भणिया, गोयमपुच्छा मह-त्थावि ॥ ६४ ॥

इति पूर्वाचार्यप्रणीता
गौतमपृच्छा समाप्त ॥

# ॥ शुद्धिपत्रक ॥

| पृष्ठांक | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २५ | ६ | दत्वा | दत्वा |
| २९ | ३ | निजमातर | निजमातरं |
| २९ | ५ | पुत्र,: | पुत्रः, |
| २९ | ७ | पन | पन |
| २९ | १० | समाचीनं | समीचीनं |
| ३१ | १२ | वष्ट्रै | कष्टै |
| ३६ | ५ | गृहीत्वानय | गृहीत्वानय |
| ३६ | ६ | भाययोक्तम् | भार्ययोक्तम् |
| ३७ | ७ | भो रहितो | भोगरहितो |
| ३८ | ७ | द्वाविंशति | द्वाविंशति |
| ३९ | ४ | महर्द्धि | महर्द्धि |
| ३९ | ९ | पुत्रीभूय | पुत्रीभूय |
| ३९ | १२ | कराति | करोति |
| ४२ | १ | सोमचन्द्रा | सोमचन्द्रो |
| ४२ | २ | देवदिन्ना | देवदिन्ना |
| ४३ | ६ | साधोर्निन्द्रां | साधोर्निन्द्रां |
| ४३ | ८ | किकर्तव्यमूढ | किंकर्तव्यमूढ |
| ४७ | १ | परिवारयुत. | परिवारयुत |
| ४८ | ३ | ३१ | ३२ |
| ५१ | ६ | पुत्रो | पुत्रो |
| ५१ | ७ | नरित्र | चारित्रं |
| ५२ | ३ | धोरो | धीरो |
| ५३ | १३ | अभयसिह | अभयसिंह |
| ५५ | ११ | गौतमः | गौतम ! |
| ५७ | ९ | नाम्ना | नाम्नो |
| ५८ | १२ | पार्श्व | पार्श्वे |
| ५९ | ७ | प्रकरेणा | प्रकारेणा |
| ५९ | ८ | आकर्निणी | आकर्णिणी |
| ५९ | ९ | सिंहासनो | सिंहासनो |
| ६१ | ११ | सर्वमुद्रोया | सर्वमुद्रीया |
| ६१ | ११ | तरिमन् | तस्मिन् |
| ६१ | १२ | द्वात्रिंशत्क | द्वात्रिंशत्क |
| ६२ | ४ | व्यन्तो | व्यन्तरो |
| ६२ | १० | ततऽसौ | ततोऽसौ |
| ६२ | १२ | पव | पवं |
| ६३ | ६ | तदादिन | तदादिन |
| ६३ | ७ | श्रेष्ठिनो | श्रेष्ठिनो |
| ६३ | १२ | कथनं | कथितं |
| ६४ | ३ | लक्ष्मीमदनस्य | लक्ष्मीमदनस्य |
| ६४ | १० | लक्ष्मी | लक्ष्मीः |
| ६४ | १५ | जिनाधिश | जिनाधिश |
| ६४ | १५ | तरुण | तरुणं |
| ६५ | १२ | श्रेरेगो | श्रैरेगो |

| पृष्ठांक | पंक्ति | शुद्ध | अशुद्ध |
|---|---|---|---|
| ६६ | ३ | मृवा. | मृत्वा |
| ६७ | २ | कथिमेक | कथितमेक |
| ६७ | ४ | द्वात्रिंश | द्वात्रिंश |
| ६८ | ९ | भा | भो |
| ६९ | ५ | गमनोत्सुकै | गमनोत्सुकैः |
| ७० | १३ | तपाऽप्य | तपोऽप्य |
| ७१ | ९ | सज ताः | सञ्जाताः |
| ७१ | १२ | मृछेया | मूर्छया |
| ७४ | ३ | पुत्रकाऽयं | पुत्रकोऽयं |
| ७७ | २ | मारिता | मारितो |
| ७८ | ३ | राहिण्याश्च | रोहिण्याश्च |
| ७८ | ११ | कराति | करोति |
| ७८ | १४ | समोपे | समीपे |
| ७९ | ८ | करोत | करोति |
| ८० | ७ | घम | धर्मं |
| ८० | १४ | देवाऽभूत् | देवोऽभूत् |
| ८२ | ८ | राहिणी | रोहिणी |
| ८३ | ७ | ब्राह्मणपुत्रैवर्जी | ब्राह्मणपुत्रैर्जीव |
| ८४ | ५ | श्रीवासुपूज्म | श्रीवासुपूज्य |
| ८४ | १४ | नरा | नरो |
| ८५ | ९ | मूलयितु | मूलयितुं |
| ८७ | २ | गामहिसं | गोमहिसं |

| पृष्ठांक | पंक्ति | शुद्ध | अशुद्ध |
|---|---|---|---|
| ८९ | २ | नैव | नैव |
| ९१ | ७ | कथयितु | कथयितुं |
| ९१ | ९ | पञ्चात्सा | पश्चात्सो |
| ९६ | ३ | स्वणभृतां | स्वर्णभृतां |
| ९६ | ४ | वार्तामद्यव | वार्तामद्यैव |
| ९९ | १२ | वर्षानन्तरं | वर्षानन्तरं |
| १०२ | ४ | नारित | नास्ति |
| १०४ | १ | ५४ | ५३ |
| १०४ | १० | शुद्रा | शूद्रा |
| १०५ | ३ | यथ | यथा |
| १०५ | ४ | शुद्धयति | शुद्धयति |
| १०५ | १२ | यूयं | यूयं |
| १०६ | ३ | ब्राह्मण | ब्राह्मण |
| १०६ | ६ | घ्द्वार्षिका | द्वार्षिको |
| १०७ | ९ | भूमिं | भूमिं |
| १०७ | १४ | साघुः | साधुः |
| १०८ | २ | कृपिकरणे | कृषिकरणे |
| १०८ | ९ | बभू। | बभूव |
| १०८ | १० | गोतम | गौतम |
| १०८ | १३ | पुनर्या | पुनर्यो |
| १११ | ६ | जीवहिसा | जीवहिंसा |
| ११४ | १ | क्षुद्रवुद्धि | क्षुद्रबुद्धि |
| ११९ | १३ | वैराग्याद्दोक्षां | वैराग्याद्दीक्षां |



सर्वतंत्रस्वतंत्र-शासनसम्राट्-सूरिचक्रचक्रवर्ति
तपोगच्छाधिपति-जगद्गुरु-भट्टारक-जैनाचार्य

# श्रीमान् विजयनेमिसूरीश्वरजी महाराज

---

धर्मः प्रापि यतो मया शिवफलः कल्पद्रुतुल्योऽनघो,
यन्नामस्मृतिरेव मंगलकरी सर्वाघसंहारिणी।
श्रीतीर्थङ्करशासनैकरसिकः सद्ब्रह्मसौभाग्यभृत्,
सोऽयं श्रीगुरुनेमिसूरिभगवान् नाथं विधत्तां मम ॥

---

जन्म संवत् १९२९ कार्तिक शुक्ला १ महुवा (सौराष्ट्र)
दीक्षा सं० १९४५ ज्येष्ठ शुक्ला ७ भावनगर।
गणिपद सं० १९६० कार्तिक कृष्णा १० पंन्यासपद
मार्गशीर्ष शुक्ला ३ वला।
आचार्य पद सं० १९६४ ज्येष्ठ शुक्ला ५ भावनगर।
स्वर्गवास सं. २००५ आसो वदि [illegible] दीवाली. गुरु. [illegible].